मीति स्फुटं व्यवहारादर्शनात्। प्रमाणेत्यादिवृत्तिविभागसूत्रे तु संस्कारमात्रजन्यत्वगुणेन तादृशं ज्ञानं स्मृतिशब्दग्टहीतमनेन च सूत्रेण मुख्यस्मृतिर्लक्षितेति। स्मृतेर्वृत्तितदर्थोभयविषयकत्वं सूत्रोक्तमवधारयितुं भाष्यकारो विमृशति। किं प्रत्ययस्येति। स्मृत्यर्थधातुयोगात् कर्मणि षष्ठी। चित्तं किं पूर्वानुभवरूपं प्रत्ययमपि स्मरति आहोस्वित् विषयमात्रमित्यर्थः। तत्र स्मृतेरुभयविषयकत्वरूपमाद्यं पक्षं सिद्धान्तयितुमादावुभयस्मरणे कारणमुभयगोचरसंस्कारमुपपादयति। ग्राह्योपरक्त इत्यादिना। यतो ग्राह्योपरक्तो ज्ञानविशेषणतया घटादिभिरप्याकारितोऽतो ग्राह्यग्रहणोभयाकारनिर्भासस्तदुभयाकारतया प्रसिद्धो यः प्रत्ययो घटं जानामीत्यनुव्यवसायः स तथा जातीयकं ग्राह्यग्रहणोभयाकारमेव संस्कारं जनयति समानाकारत्वेनैव लाघवादनुभवसंस्कारस्मृतीनां कार्य्यकारणभावादित्यर्थः। नन्वत्र व्यवसायरूपवृत्तेः स्वप्रकाशत्वमेव निर्भासान्तविशेषणार्थः कथं नेष्यत इति चेत्, न। कर्मकर्त्तृविरोधेन वृत्तेः स्वविषयकत्वस्य सूत्रभाष्याभ्यां चतुर्थपादे निराकरिष्यमाणत्वात्। ननु किं व्यवसायस्य संस्कारजनकत्वमेव नास्ति। न नास्ति, किन्तु तत्संस्कारजन्यं ज्ञानं स्मृतिर्न भवति प्रमुष्टतत्ताकस्य पराभिमतस्य स्मरणस्यास्माभिर्व्यवहारानुसारेणानुभवमध्य एव प्रवेशनादिति। नन्वस्तु उभयविषयकसंस्कारस्ततः किमित्यत आह। स संस्कार इति। स चोभयविषयकसंस्कारो यदा स्वाभिव्यञ्जकेन कालादिना अभिव्यक्तो भवति तदा तदाकारां स्वसमानाकारामेव ग्राह्यग्रहणोभयात्मिकां तदुभयविषयिणीं स्मृतिं जनयतीत्यर्थः। अनुभूतविषयासम्प्रमोषं सूत्रोक्तं व्याख्यायानुव्यवसायतज्जन्यस्मरणयोर्विशेषमप्याह। तत्र ग्रहण इति। पूर्वं मुख्यं विशेष्यमिति यावत्। तयोः प्रत्ययस्मरणयोरत्यन्तं समा-

माकारत्वं न मन्तव्यं यतस्तत्र तयोर्मध्ये बुद्धिरनुव्यवसायरूपा यथोक्तप्रत्ययो ग्रहणाकारविशेष्यिका भवति घटमहं जानामी-त्यनुव्यवसाये ज्ञानस्य घटांशे विशेष्यत्वात्, स्मृतिस्तु ग्राह्या-कारविशेष्यिका भवति स घट इत्येव स्मरणात्। तत्ता च पूर्व-ज्ञानत्वरूपा। अतः स्मृतौ ज्ञानस्य ग्राह्यं विशेष्यमिति। अयं चाकारभेदोऽनुभवसिद्ध इति भावः। स्मृतेरवान्तरभेदं दर्शयति। सा च द्वयीति। भावित उद्भावितः सूचितः स्मर्त्तव्यार्थो ययेति भावितस्मर्त्तव्या तद्भिन्ना चाभावितस्मर्त्तव्या। तयोरुदाहरणे दर्शयति। स्वप्ने इति। स्वप्नदर्शनमेव हि भाव्यर्थसूचकतया शास्त्रे सिद्धं न तु जाग्रत्कालीना स्मृतिरिति। ननु स्वप्ने पूर्व-दृष्टत्वास्मरणात् संस्कारमात्रजन्यत्वाभावाच्च कथं स्मृतित्वमिति चेन्न। अंशतस्तदुभयरूपत्वस्य स्वप्नज्ञानेष्वपि सत्त्वात् तादृशस्य स्वप्नांशस्यैवात्रोपन्यासादिति। सर्ववृत्त्यन्ते स्मृतिवृत्तेरुपन्यासस्य बीजमाह। सर्वा इति। अनुभवात्, अनुव्यवसायात्। अनु-भावादिति पाठे प्रभावादित्यर्थः। यथोक्तानां वृत्तीनां निरो-ध्यत्वे बीजमाह। सर्वाश्चैता इति। एताः सर्वाः प्रमाणादिवृत्तयो बुद्धिद्रव्यस्य सुवर्णस्येव प्रतिमादिवद्विषयाकारा द्रव्यरूपाः परि-णामाः सुखदुःखमोहगुणका इत्यर्थः। बुद्धिवृत्तिर्हि रूपादिमती भार्य्येव सुखादिमतो पुरुषस्य भोग्येति। अतो दुःखवत्त्वेन वृत्तयो निरोद्धव्या इत्युपसंहरिष्यति। ननु सुखवत्त्वेनोपादेय-त्वमेव कुतो न भवेदित्यत आह। सुखदुःखेति। क्लेशेषु क्लेश-व्याख्यानसूत्रेषु व्याख्येयाः। व्याख्यानमेवाह। सुखानुशयी राग इत्यादि। सुखदुःखानुशयी सुखदुःखविषयकः। तथा च राग-जनकतया दुःखवत्सुखमपि हेयं, मोहस्त्वविद्यारूपतया शोका-द्यखिलदुःखनिदानत्वेन हेय इत्याशयः। एता इति। अतो दुःखात्मकत्वादेताः सर्वा निरोद्धव्या इत्यर्थः। प्रकरणार्थमुप-

संहरति। आसामिति। तदेवं सामान्यतो योगस्य लक्षणं कृत-मिदानीं तस्योपायं प्रतिपादयिष्यति सूत्रकारस्तत्र संक्षेपाद् उपायसारसंग्राहकं सूत्रमवतारयति। अथासामिति॥ ११॥

* अभ्यासवैराग्याभ्यां तन्निरोधः॥ १२॥ *

चित्तनदी नाम उभयतो वाहिनी वहति कल्याणाय। वहति पापाय च। या तु कैवल्य-प्राग्भाराविवेकविषयनिम्ना सा कल्याणवहा। संसारप्राग्भाराऽविवेकविषयनिम्ना पापवहा। तत्र वैराग्येण विषयस्रोतः खिलीक्रियते विवेक-दर्शनाभ्यासेन विवेकस्रोत उद्घाट्यते इत्युभया-धीनश्चित्तवृत्तिनिरोधः॥ १२॥

अभ्यासवैराग्ये व्याख्यास्येते। अभ्यासवैराग्ययोरवान्तरव्या-पारभेदेन निरोधजनने समुच्चय एव न विकल्प इत्याह। चित्त-नदीति। यथा नदी कदाचित् समुद्राभिमुखी वहति कदाचिच्च तद्वैपरीत्येन पृथिव्यभिमुखी वहति। अन्यथा समुद्रगमनमात्रेण शुष्येतैव। एवं चित्तनद्यपि उभयतोवाहिनी। उभयतो वह-नस्य प्रयोजनमाह। वहतीति। कल्याणं मोक्षस्तदर्थं, पापं संसारस्तत्फलत्वात्तत्कारणत्वाद्वा तदर्थम्। तथा चोक्तम्।

प्रत्यग्दृशां विमोक्षाय निबन्धाय पराग्दृशाम्।
अपामार्गलतेवायं विरुद्धफलदो भवः॥ इति।

प्रवाहद्वयं विभिद्य दर्शयति। या तु इति। प्राग्भारा अभि-मुखी। विवेकविषयो निम्नो गमनमार्गो यस्या इत्यर्थः। जलस्य हि प्रवाहाभिमुखं वर्त्म नीचं भवतीति। तत्र चित्तनद्यां वैरा-

ग्येण विषयमार्गगं वृत्तिस्रोतः खिलीक्रियते अल्पीक्रियते विवेक-दर्शनस्याभ्यासेन च विवेकमार्गगं वृत्तिस्रोत उद्घाट्यते बलवत् क्रियते येन निरोधाख्ये कैवल्यसागरे विलीयते इत्यतोऽवान्तर-व्यापारभेदेनोभयाधीनश्चित्तवृत्तिनिरोध इत्यर्थः। तदुक्तं गीता-याम्।

असंशयं महावाहो ! मनो दुर्निग्रहं चलम्।
अभ्यासेन तु कौन्तेय ! वैराग्येण च गृह्यते ॥ इति।

अत्र विवेकदर्शनमात्रस्याभ्यासः प्राधान्येनोक्तः। आगामि-सूत्रे निरोधसाधनानुष्ठानसामान्यस्यैवाभ्यासत्वावगमादिति। अत्राभ्यासवैराग्ये क्रमाल्लक्षयति सूत्रजातेन ॥ १२ ॥

## * तत्र स्थितौ यत्नोऽभ्यासः ॥ १३ ॥ *

**चित्तस्यावृत्तिकस्य प्रशान्तवाहिता स्थितिः। तदर्थः प्रयत्नो वीर्य्यमुत्साहः तत्सम्पिपादयिषया तत्साधनानुष्ठानमभ्यासः ॥ १३ ॥**

तत्राभ्यासवैराग्ययोर्मध्ये। चित्तस्येति। अवृत्तिकस्य वृत्त्य-न्तरशून्यस्य न तु वृत्तिसामान्याभाववतः, स्थित्यनन्तरं सम्प्रज्ञा-तस्य समापत्तिसूत्रे भाष्यकारैर्व्याख्येयत्वात्। प्रशान्तवाहितेति। वृत्त्यन्तराभावात् प्रशान्ता हर्षशोकादितरङ्गरहिता एकाग्र-वृत्तिधारेत्यर्थः। शान्तिश्च तल्लक्षणा।

श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा शुभाशुभम्।
न हृष्यति ग्लायति च स शान्त इति कथ्यते ॥

इति। स्थितिशब्दार्थं व्याख्याय सप्तम्यर्थं व्याचष्टे। तदर्थ इति। तथा च चर्मणि द्वीपिनं हन्तीतिवदियं निमित्तसप्त-मीति। यत्नशब्दं व्याचष्टे। प्रयत्न इति। प्रयत्नमपि पर्य्या-

याभ्यां विशदयति। वीर्य्यमुत्साह इति। तथापि अस्पष्टं मन्वानो-ऽतिविशेषत आह। तत्सम्पिपादयिषयेति। तत्सम्पादनेच्छया श्रद्धावीर्य्यस्मृतिसमाधिप्रज्ञादीनां वक्ष्यमाणानां साधनानामनुष्ठानमभ्यास इत्यभ्यासलक्षणं कृतम्। ननु व्युत्थानसंस्कारेणानादिना प्रतिबन्धात् कथमभ्यासः स्थितिं सम्पादयतु इत्याकाङ्क्षायामाह सूत्रकारः॥ १३॥

* स तु दीर्घकालनैरन्तर्य्यसत्कारासेवितो दृढभूमिः॥ १४॥ *

दीर्घकालासेवितः निरन्तरासेवितः तपसा ब्रह्मचर्य्येण विद्यया श्रद्धया च सम्पादितः सत्कारवान् दृढभूमिर्भवति। व्युत्थानसंस्कारेण द्रागित्येवानभिभूतविषय इत्यर्थः॥ १४॥

सत्कारासेवित इत्येतद्विवृणोति। तपसेत्यादिना सत्कारवानित्यन्तेन। दृढभूमिरित्येतद्विवृणोति। व्युत्थानेति। व्युत्थानसंस्कारेण द्रागित्येव सहसा अनभिभूतः स्थितरूपो विषयो यस्य स भवतीत्यर्थः। अभ्यासं कृत्वोपरमे च कालक्रमादभिभवो भवत्येवेति प्रतिपादयितुं द्रागित्येवेत्युक्तम्। अभ्यासं लक्षयित्वा वैराग्यं लक्षयति॥ १४॥

* दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्॥ १५॥ *

स्त्रियोऽन्नपानमैश्वर्य्यमिति दृष्टविषयवितृष्णस्य स्वर्गवैदेह्यप्रकृतिलयत्वप्राप्तौ आनुश्रविकविषये वितृष्णस्य दिव्यादिव्यविषयसम्प्रयोगेऽपि

**चित्तस्य विषयदोषदर्शिनः प्रसंख्यानबलादनाभोगात्मिका हेयोपादेयशून्या वशीकारसंज्ञा वैराग्यम् ॥ १५ ॥**

रागाभावमात्रं दोषदर्शनजन्यो रागाभावो वा न निरोधहेतुर्वैराग्यं रोगादिनिमित्तकारुचितो योगानुदयात् । दोषदर्शनजवैराग्यादनन्तरमपि विषयसान्निध्येन चित्तक्षोभतः सौभर्य्यादेर्योगानिष्पत्तेश्च । अतोऽत्र वैराग्यस्य वैतृष्ण्यमात्रं न लक्षणं किन्तु यथोक्तवितृष्णस्य वशीकारसंज्ञेति । तदेतद् व्याचष्टे । स्त्रिय इति । दृष्टविषयवितृष्णस्येति व्याख्याय आनुश्रविकविषयवितृष्णस्येति व्याचष्टे । स्वर्गेति । स्वर्गश्च वैदेह्यञ्च प्रकृतिलयत्वञ्च तेषां प्राप्तिरेवानुश्रवाख्यवेदोक्तो विषयस्तत्र च वितृष्णस्येत्यर्थः । स्थूलदेहविरहेऽपि लिङ्गशरीरेणैव येषां देहानां भोगस्ते विदेहास्तद्रूपता च वैदेह्यम् । ये तु सावरणब्रह्माण्डाद्बहिरावरणे प्रकृतौ लीनाः श्लिष्टाः लिङ्गदेहेन सह गता इति यावत्, तेषां भावः प्रकृतिलयत्वं न तु प्रलय एवात्रोक्तः, करणं गतस्यैव श्रुतिस्मृत्योर्भोगश्रवणात् । अन्यथा प्राकृतप्रलयवदपुरुषार्थत्वाच्च । प्रकृतिलयानाञ्च विदेहेभ्योऽयं भेदः । विदेहाः सावरणब्रह्माण्डान्तर्गता एवाल्पमैश्वर्य्यं मलिनञ्च विषयं भुञ्जते, प्रकृतिलयास्तु बहिर्गमनेन विदेहान् प्रत्यपीशते स्वसङ्कल्पमात्रेण तत्रैव निर्मलं कारणसत्त्वनिर्मितं विषयञ्च भुञ्जते त ईश्वरकोटय उच्यन्त इति । षष्ठ्यन्तं हेतुगर्भविशेषणपदं व्याख्याय वशीकारसंज्ञेति विशेष्यपदं व्याचष्टे । दिव्यादिव्येति । अयमर्थः । आदौ विषयसान्निध्यरूपेऽवसरे दोषावरकाभावाद् दोषदर्शनेन वैतृष्ण्यं भवति 'विरक्तिर्दोषदर्शनादि'ति स्मृतेः । तच्च त्रिविधं यतमानसंज्ञा व्यतिरेकसंज्ञा एकेन्द्रियसंज्ञेति ।

एताश्च पश्चाद्व्याख्यास्यामः। एतस्माच्च त्रिविधवैतृष्णाद्भ्यस्यमानाद्विषयसंयोगकालेऽपि दोषदर्शनमप्रतिबद्धमुत्पद्यते 'वैराग्याद्दोषदर्शन'मिति स्मृत्यन्तरात्, कुतः पुनरप्रतिबन्धः। तत्रोक्तं, प्रसंख्यानबलात् दोषसाक्षात्कारस्य बलवत्त्वादिति। दोषसाक्षात्काररूपबलाभावात्तु, सौभर्य्यादेः प्राग्विरक्तस्यापि विषयसन्निकर्षेण दोषदर्शनं प्रतिबध्य पुनः राग उत्पादित इति। एतस्माच्च दोषदर्शनोत्कर्षाद्विषयसंयोगकालेऽपि या चित्तस्यानाभोगात्मिका आभोगरहिता एतस्य विवरणं हेयोपादेयशून्या रागद्वेषशून्या वशीकारसंज्ञा या वितृष्णा सा वैराग्यमपरमिति शेषः। उत्तरसूत्रे तत्परमिति वचनादस्यापरत्वम्। तथा च रागद्वेषशून्यस्य विषयसाक्षात्कारस्य योग्यता वशीकारसंज्ञाख्यं वैराग्यमिति पर्य्यवसितम्। तेन सर्वदैतादृशविषयसंयोगभावेऽपि न निरोधासम्भवः। तदेवमनेन सूत्रेण हेतुहेतुमद्भावरूपतस्तन्त्रान्तरसिद्धं वैराग्यचतुष्टयमेवोक्तम्। तत्र प्रथमभूमिका यतमानसंज्ञानाम्नी वितृष्णा ज्ञानपूर्वकं वैराग्यसाधनानुष्ठानम्। द्वितीयभूमिका व्यतिरेकसंज्ञा सा च जितान्येतानीन्द्रियाणि एतानि च जेतव्यानीति व्यतिरेकावधारणयोग्यता। तृतीयभूमिका च एकेन्द्रियसंज्ञा सा च वाह्येन्द्रियविषयेषु रूपादिषु रागादिक्षये सति एकस्मिन्नेव मनसि मानापमानादिविषयकरागद्वेषादिक्षयो रागद्वेषज्ञानपूर्वक इति। चतुर्थभूमिका तु वशीकारसंज्ञा स्पष्टमुक्तैवेति ॥ १५ ॥

अपरवैराग्यमुक्त्वा परवैराग्यमाह।

*** तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ १६ ॥***

दृष्टानुश्रविकविषयदोषदर्शी विरक्तः पुरु-

षदर्शनाभ्यासात् तच्छुद्धिप्रविवेकाप्यायितबुद्धि-र्गुणेभ्यो व्यक्ताव्यक्तधर्मकेभ्यो विरक्त इति तद् द्वयं वैराग्यम् । तत्र यदुत्तरं तत् ज्ञानप्रसाद-मात्रम् । यस्योदये प्रत्युदितख्यातिरेवं मन्यते प्राप्तं प्रापणीयं क्षीणाः क्षेतव्याः क्लेशाः छिन्नः श्लिष्टपर्वा भवसंक्रमो—यस्य अविच्छेदात् जनित्वा म्रियते, मृत्वा च जायत इति ज्ञानस्यैव परा-काष्ठा वैराग्यम्, एतस्यैव हि नान्तरीयकं कैवल्य-मिति ॥ १६ ॥

अथ उपायद्वयेन निरुद्धचित्तवृत्तेः कथमुच्यते सम्प्रज्ञातः समाधिरिति ।

तदिति वैराग्यं परामृश्यते, तथा चात्मद्वयान्यतरसाक्षा-त्काराभ्यासाद्धेतोरुत्पद्यमानं सकलगुणेषु वैतृष्ण्यं परं श्रेष्ठं वैराग्यमित्यर्थः । पूर्वसूत्रोक्तवैराग्यादस्य भेदं दर्शयति । दृष्टे-त्यादिना । पूर्वसूत्रे विषयदोषदर्शनाद्विषयेष्वेव वैराग्यमुक्तं न तु ज्ञाने, तदानीं ज्ञानेऽपि विनाशित्वादिदोषदर्शनसाम्येऽपि नालं-बुद्धिरूपं वैराग्यं सम्भवति अविद्यानिवृत्त्याख्यप्रयोजनवत्त्वात्, अत्र तु सूत्रे ज्ञानेनाविद्यानिवृत्त्यादौ सिद्धे तेनैव दोषदर्शनेना-नात्मत्वदृष्ट्या च ज्ञानसाधारणेष्वखिलकार्य्यकारणेष्वात्मत्वमस्यो-पेक्षेति वैराग्ययोर्भेद इति वाक्यार्थः । तच्छुद्धीति । पुरुषशुद्धि-प्रविवेकश्चितिशक्तिरपरिणामिनीत्यादिना दर्शितस्तेनाप्यायिता लब्धा समाप्तपुरुषार्था बुद्धिर्यस्येति विग्रहः । व्यक्ताव्यक्तेति । व्यक्ताव्यक्ते स्थूलसूक्ष्मे कार्य्ये धर्मावाश्रिते येषु सत्त्वादिगुणेषु

तेभ्यः, तैः कार्य्यैः सहितेभ्यस्तेभ्य इति यावत्। तद्द्वयमिति। तत्तस्मादुभयं परस्परभिन्नं वैराग्यमित्यर्थः। द्वितीयवैराग्यस्य परत्वे हेतुमाह। तत्र यदुत्तरमिति। ज्ञानप्रसादमात्रं वैराग्यमित्यागामिनान्वयः। ज्ञानस्य प्रसादश्च स्वयं व्याख्यास्यते। ननु वैतृष्ण्यं तृष्णाविरहरूपं वैराग्यं सूत्रकारेणोक्तं तद्विहाय कथं भाष्यकारेण ज्ञानरूपं तदुच्यत इति चेत्, न। शब्दभेदेऽप्यर्थाभेदात्। न ह्यभावोऽस्मन्मतेऽतिरिक्तोऽस्ति, अधिकरणस्यावस्थाविशेषस्यैवाभावत्वात्। तथा च चित्तस्यैव तादृशी ज्ञानावस्थैव तृष्णाविरह इति। यदि च सुषुप्त्यादौ तृष्णाविरहोऽपेक्षितस्तदा ज्ञानप्रसादयोग्यतैव परवैराग्यमुच्यतां योग्यता च निर्मलसत्त्वतेति। अपि च भवतु वैतृष्ण्यमेव वैराग्यं तथापि ज्ञानप्रसादेनैव वैतृष्ण्यगतो विशेषोऽनुमीयत इति लिङ्गलिङ्गिनोरभेदोपचारात् सूत्रभाष्ययोर्न विरोधः। विरामप्रत्ययाभ्यासपूर्व इत्यागामिसूत्रेऽपि परवैराग्यस्य प्रत्ययत्वलाभाच्चेति। ज्ञानप्रसादस्य लक्षणमाह। यस्योदय इति। यस्य ज्ञानप्रसादस्योदये सति। एतस्यैव विवरणं प्रत्युदितख्यातिर्निष्पन्नात्मज्ञानो योगीति। प्रापणीयं ज्ञानं प्राप्तं सिद्धं यतः क्षीणा अविद्यादयः क्षेतव्याः क्लेशाः। अतश्च श्लिष्टानि निःसन्धीनि पर्वाणि यस्य श्लिष्टपर्वा भवसंक्रमो देहाद्देहान्तरसञ्चाराख्यः संसारश्छिन्नः, पुनर्न भवितेति यावत्। यस्य संसारस्याविच्छेदात् जन्ममरणप्रवाहोऽतिदुःखदो भवतीत्येवं मन्यत इत्यन्वयः। ज्ञानप्रसादमात्रमित्युक्तं शब्दान्तरेण विवृणोति। ज्ञानस्यैवेति। ज्ञानस्य पराकाष्ठा च विवेकख्यातावलम्प्रत्ययो दुःखात्मिकेयमपि शाम्यतु इतिरूप इत्यर्थः। अस्य ज्ञानकाष्ठात्वे हेतुमाह। एतस्यैवेति। एतस्यैव यतो ज्ञानप्रसादस्य कैवल्यं नान्तरीयकं नियतम्। एतस्मिन्नेव सति कैवल्यमावश्यकं नान्यस्मिन् ज्ञाने यमनियमादौ वैराग्ये

वा तत्सत्त्वेऽप्यसम्प्रज्ञातानुदयेनाशेषतः प्राचीनकर्मक्षयानियमतः कषायसम्भवतश्च मोक्षे विलम्बसम्भवादिति। तदेवं सामान्यतो योगस्तत्साधनं चोक्तमिदानीं विशेषतो योगतत्साधने वक्तव्ये तत्रादौ योगगतमवान्तरं विभागं दर्शयिष्यति सूत्रकारः। तत्सूत्रावताराय पृच्छति। अथोपायेति। उपायद्वयेन अभ्यासवैराग्याभ्यां, निरुद्धराजसतामसवृत्तेः पुरुषस्य कथं कैः प्रकारभेदैः सम्प्रज्ञातयोगः शास्त्रेषु कथ्यत इत्यर्थः। अत्र प्रत्युत्तरं सूत्रम्॥ १६॥

* वितर्कविचारानन्दाऽस्मितानुपगमात् सम्प्रज्ञातः॥ १७॥ *

वितर्कः—चित्तस्य आलम्बने स्थूल आभोगः। सूक्ष्मो विचारः। आनन्दो ह्लादः। एकात्मिका संविद् अस्मिता। तत्र प्रथमः चतुष्टयानुगतः समाधिः सवितर्कः। द्वितीयो वितर्कविकलः सविचारः। तृतीयो विचारविकलः सानन्दः। चतुर्थस्तद्विकलः अस्मितामात्र इति। सर्वे एते सालम्बनाः समाधयः॥ १७॥

अथ असम्प्रज्ञातसमाधिः किमुपायः? किंस्वभावो वेति,—

अस्यार्थः। साक्षात्कारविशेषरूपैर्वितर्कादिभिरनुगमात् हेतोः सम्यक् प्रज्ञावत्त्वेन योगः सम्प्रज्ञातनामा भवति। वितर्कादिभूमिभेदैश्चतुर्धा विभक्त इत्यर्थादिति। अत्र रूपानुगमादिति पाठः प्रामादिकत्वादुपेक्षणीयः। भाष्ये वितर्कविकलः स-

विचार इत्यादिप्रयोगेषु रूपपदाप्रयोगात् आद्यसूत्रेऽपि भाष्यकृता वितर्कानुगतो विचारानुगत इत्यादेरेव प्रयोगाच्च। यच्च तत्र पाठे वितर्कादीनां रूपैरनुगमादिति कस्यचिद्व्याख्यानं तदपि वैयर्थ्यादुपेक्षणीयम्। वितर्कादिचतुष्टयं व्याचष्टे। वितर्कश्चित्तस्येत्यादिना। योनिजं वा विराजं वा चतुर्भुजादिकं वा स्थूलं षड्विंशतितत्त्वसङ्घातमाश्रित्य प्रथमं भावना प्रवर्त्तते सालम्बनमदृष्टजातीयेषु चैतन्यपर्य्यन्तेषु विवेकेन पूर्वं चिन्तनासम्भवात्। योगबलादेव हि तानि पश्चात्साक्षात् क्रियन्त इति न तान्यालम्बनानि। तथा चैकस्मिन्नेवालम्बने क्रमेण चतुष्प्रकारः सम्प्रज्ञातो भवति। तत्रालम्बने विराट्शरीरादौ प्रथमं यश्चित्तस्य स्थूलाकारत्वात् स्थूल आभोगः परिपूर्णता। स्थूलयोर्भूतेन्द्रिययोरदृष्टाश्रुतामताशेषविशेषसाक्षात्कारः सवितर्क इत्यर्थः। विशेषेण तर्कणमवधारणं वितर्कस्तेनानुगतो युक्तो निरोधो वितर्कानुगतनामा योग इति भावः। सवितर्कनिर्वितर्कौ चास्य वितर्कस्यावान्तरभेदौ वक्ष्यति। तत्र च वितर्कशब्दो विपरीततर्कणार्थकः। शब्दार्थज्ञानविकल्पस्यैव तस्मिन् सूत्रे वितर्कशब्दार्थत्वावगमात्। सूक्ष्मो विचार इति। तत्रैवालम्बने कारणत्वादिनानुगता ये प्रकृतिमहदहङ्कारपञ्चतन्मात्ररूपा भूतेन्द्रिययोः सूक्ष्मा अर्थास्तदाकारत्वात् सूक्ष्मो यश्चित्तस्याभोगः सूक्ष्मगताशेषविशेषसाक्षात्कारः सविचार इत्यर्थः। विशेषेण चरणं सूक्ष्मवस्तुपर्य्यन्तमिति विचारस्तेनानुगतो युक्तो निरोधो विचारानुगतनामा योग इति भावः। सविचारनिर्विचारौ चास्य विचारस्यावान्तरभेदौ वक्ष्यति। तत्र च विचारशब्दो मन्दचरणार्थकस्तान्त्रिकपरिभाषा वा। तद्भाष्ये सूक्ष्मविषयकसमाधेः कार्य्याद्युपरागस्यैव विचारशब्दार्थत्वावगमात्। आनन्दो ह्लाद इति। तत्रैवालम्बने यश्चित्तस्य विचारानुगतभूम्यारोहात्सत्त्व-

प्रकर्षेण जायमाने ह्लादाख्यसुखविशेषे आभोगः साक्षात्कारो भवति स आनन्दविषयकत्वादानन्द इत्यर्थः । तेनानुगतो युक्तो निरोध आनन्दानुगतनामा योग इति भावः । तदानीं चानन्द-गोचर एवाहं सुखीति चित्तवृत्तिर्भवति न सूक्ष्मवस्तुष्वपीति विचारानुगतात् विशेषः । तथा च गीता ।

सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥
तं विद्याद् दुःखसंयोगवियोगं योगसंज्ञितम् ।

इति । आनन्दस्य च सानन्दनिरानन्दत्वेन भेदो नास्ति सूत्रभाष्ययोरवक्ष्यमाणत्वादिति । अत्र कश्चित् ह्लादो ह्लादवा-निन्द्रियवर्गः । तथा च इन्द्रियाकारत्वादिन्द्रियरूपो यश्चित्त-स्याभोगः साक्षात्कारः स आनन्द इत्यर्थं वदति । तन्न । एता-दृशलक्षणायां प्रमाणादर्शनात् । इन्द्रियस्यापि स्थूलतया तत्रा-भोगस्यापि वितर्कमध्य एव प्रवेशाच्च कारणत्वमेव सूक्ष्मत्वमिति भाष्ये वक्ष्यमाणत्वेन केवलविकृतित्वरूपस्य स्थूलत्वस्येन्द्रियसाधा-रण्यादिति । किञ्च । इन्द्रियगोचरसम्प्रज्ञातस्यानन्दानुगतत्वे सति परोक्तरीत्या तत्रापि वृत्त्युपरागानुपरागाभ्यां सानन्द-निरानन्दरूपावान्तरविभागसम्भवात्तदवचनेनागामिसूत्रभाष्ययो-र्न्यूनता स्यात् । अस्मद्व्याख्याने चावान्तरविभागो न सम्भव-तीति न तदवचनन्यूनता । यत्तु ग्रहीतृग्रहणग्राह्येषु तत्स्थ-तदञ्जनतासमापत्तिरितिसूत्रे ग्राह्यात् पृथगिन्द्रियेषु सम्प्रज्ञातो वक्ष्यते । तत्प्रकारान्तरेण सम्प्रज्ञातस्याखिलविषयसङ्कलनार्थमेव न तु वितर्कानुगतविचारानुगताभ्यामिन्द्रियसमापत्तेरानन्दानु-गतरूपभेदमभिप्रेत्य तथा तात्पर्य्यग्राहकलिङ्गाभावादिति दिक् । एकात्मिका संविदस्मितेति । एकशब्दोऽत्र केवलवाची एकात्मिका एक एवात्मा अस्यां विषयत्वेनास्तीत्येकात्मिका । तथा चोक्तम् ।

श्कालम्बने या चित्तस्य केवलपुरुषाकारा संवित् साक्षात्कारोऽस्मित्येतावन्मात्राकारत्वादस्मितेत्यर्थः। सा च जीवात्मविषया परमात्मविषया चेति द्विधा वक्ष्यते तेनानुगतो युक्तो निरोधोऽस्मितानुगतनामा योग इति भावः। अस्या अस्मिताया अपि सास्मितनिरस्मितरूपो विभागो नास्ति सूत्रभाष्ययोरवक्ष्यमाणत्वात् केवलपुरुषज्ञानस्य निर्विकल्पकमात्ररूपतया द्विविधत्वासम्भवाच्च। देहेन्द्रियाद्युपरागे तु सविकल्पानां योगानां वितर्कानुगतादिभूमित्रय एवान्तर्भावादिति। अत्र ईश्वरचेतनत्वसाक्षात्कारस्तस्यापि संग्रहः सोपाधिकेश्वरसम्प्रज्ञातस्य च विचारानुगते प्रवेशः। एताश्च सम्प्रज्ञातभूमय आनन्दानुगतं विचारानुगते प्रवेश्य मोक्षधर्मवाक्येनोक्ताः।

वितर्कश्च विवेकश्च विचारश्चोपजायते।
मुनेः समादधानस्य प्रथमं योगमादितः॥

इति। प्रथमं योगं सम्प्रज्ञातं समादधानस्य कुर्वतः। आदितः क्रमाज्जायत इत्यर्थः।

योगारम्भे मूर्त्तहरिममूर्त्तमथ चिन्तयेत्।
स्थूले विनिर्जितं चित्तं ततः सूक्ष्मे शनैर्नयेत्॥

इति। स्मृतिद्वयं चास्मिन्नौत्सर्गिकक्रमे प्रमाणमिति। इदानीं 'संवेद्ये केवले ध्यानं न कुर्य्याद्रघुनन्दने'त्यादिस्मृत्यनुसारेण पूर्वपूर्वभूमिकासु उत्तरोत्तरभूमिविषयस्य चिन्तनमुत्तरोत्तरभूमिषु च पूर्वपूर्वविषयस्य परित्यागं विदधाति। तत्र प्रथमश्चतुष्टयानुगत इत्यादिना। तत्र प्रथमः सवितर्को वितर्कानुगतः समाधिश्चतुष्टयानुगतो वितर्कादिचतुष्टयेनानुगतो भवति। तत्प्रायःपिण्डवदेकीभावेन स्थूलसाक्षात्कारे पुरुषपर्य्यन्तानां सर्वेषामेव भानात्। अत्र च विचारादित्रयविषयग्राहकतामात्रेण विचारादित्रयानुगतत्वं विवक्षितमन्यथा साङ्कर्य्यापत्तेः। वितर्कानुगते

समाधौ केवलात्मपर्य्यन्तसाक्षात्काराभावाच्च । एवमुत्तरेष्वपि बोध्यम् । द्वितीय इति द्वितीयो विचारानुगतो वितर्कविकलः वितर्कभूमिजयात्तत्परित्यागेन तद्विषयविकलः । तृतीय इति । तृतीय आनन्दानुगतो विचारविषयेणापि विकलः । चतुर्थ इति । चतुर्थोऽस्मितानुगतस्तद्विकल आनन्देनापि विकल इत्यतोऽस्मितामात्र इत्यर्थः । असम्प्रज्ञातात्सम्प्रज्ञातस्य भेदमाह । सर्व एत इति । सालम्बनाः साधारणा एकाग्रवृत्तियुक्ता इति यावत् । समाधयो योगाः कार्य्यकारणयोरभेदादिति प्रागेव व्याख्यातम् । क्रमप्राप्तमसम्प्रज्ञातमवतारयितुं पृच्छति । अथेति ॥ १७ ॥

* विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः ॥ १८ ॥ *

सर्ववृत्तिप्रत्यस्तमये संस्कारशेषो निरोधश्चित्तस्य समाधिरसम्प्रज्ञातः । तस्य परं वैराग्यम् उपायः । सालम्बनो हि अभ्यासः तत्साधनाय न कल्पत इति । विरामप्रत्ययो निर्वस्तुक आलम्बनीक्रियते, स च अर्थशून्यः, तदभ्यासपूर्वं चित्तं निरालम्बनमभावप्राप्तमिव भवति इत्येष निर्वीजः समाधिरसम्प्रज्ञातः ॥ १८ ॥

स खलु अयं द्विविध उपायप्रत्ययो भवप्रत्ययश्च, तत्र उपायप्रत्ययो योगिनां भवति,—

वृत्त्यापि विरम्यतामिति प्रत्ययो विरामप्रत्ययः परं वैराग्यं ज्ञानेऽप्यलम्बुद्धिर्ज्ञानमपि शाम्यतु इत्येवंरूपा तस्या अभ्यासात् पौनःपुन्याज्जायत इत्याद्यविशेषणार्थः । तथा चाद्यविशेषणे-

णोपायकथनं मध्येन लक्षणकथनमन्त्येन लक्ष्यकथनमन्योऽसम्प्रज्ञात इत्यर्थः। अन्त्यं विशेषणद्वयं व्याचष्टे। सर्वेति। समाधियोगः। आद्यविशेषणस्य पर्य्यवसितार्थमाह। तस्य परं वैराग्यमुपाय इति। नन्वेकाग्रतारूपोऽभ्यासोऽप्यत्र साक्षात्कारणं कथं न भवति सम्प्रज्ञात इवेत्याकाङ्क्षायामाह। सालम्बन इति। पुरुषपर्य्यन्तं कस्मिन्नप्यालम्बने चित्तस्यैकाग्रतारूपोऽभ्यासो न असम्प्रज्ञातस्य साक्षात्साधको भवति आलम्बनवृत्त्यविरोधित्वात्। अतः पुरुषख्यातिपर्य्यन्तासु अखिलवृत्तिषु अलम्बुद्धिरूपो विरामप्रत्ययः परवैराग्याख्य एवासम्प्रज्ञातेन साधनतया अवलम्बनीक्रियते आश्रीयते। स यतो निर्वस्तुको, नास्ति वस्तु चिन्तनीयं यत्रेत्यर्थः। ननु तस्य निर्वस्तुकत्वं कथं तदाश्रयणे हेतुस्तत्राह। स च अर्थशून्य इति। सोऽप्यसम्प्रज्ञातो ध्येयार्थशून्यः अतोऽखिलध्येयवैराग्यमेव तत्र हेतुर्युक्त इत्यर्थः। सूत्रस्य फलितार्थमाह। तदभ्यासेति। कृतवैराग्याभ्यासं चित्तं निरालम्बनं निर्विषययमभावप्राप्तमिव वृत्तिरूपकार्य्याकरणात् मृतकवद्भवति इत्येषोऽवस्थाविशेष इत्यादेरयमर्थः। निर्वीज इति। संस्कारद्वारा जन्म वीजं ज्ञानकर्म तच्छून्यावस्थेत्यर्थः। संस्काराख्यसंसारवीजोन्मूलक इति वार्थः। असम्प्रज्ञातस्यापि निमित्तभेदात् द्वैविध्यं सूत्राभ्यां सूत्रकारो वक्ष्यति। तदेव द्वैविध्यं युक्तिसिद्धेन पूर्व्वाचार्य्योक्तक्रमेण दर्शयति तयोः सूत्रयोरवतारणाय। स खल्वयं द्विविध इत्ति। सोऽयमसम्प्रज्ञातः, आगामिसूत्रेऽस्य प्रज्ञापूर्वकत्वदर्शनात्। उपायप्रत्ययो वक्ष्यमाणश्रद्धाद्युपायकारणको योगिनामिह लोके भवति। इह लोके योगभ्रष्टानाञ्च देवताविशेषतापन्नानां देवलोके भवप्रत्ययो जन्ममात्रकारणक इति क्रमः। तत्रोपायप्रत्ययं विस्तरेण वदिष्यन् सूत्रकारः सूचीकटाहन्यायेनादौ भवप्रत्ययं वदिष्यतीति सूत्रभाष्ययोः क्रमभेदो

न दोषायेति मन्तव्यम् । उत्पत्तिक्रमानुसारेण सौत्रं क्रममुल्लङ्घ्य पूरयित्वा सूत्रमुत्थापयति । तत्रेति । तत्रोपायप्रत्ययो योगिनां प्रकृष्टयोगानां भवति । स च पश्चाद्वच्यत इति शेषः ॥ १८ ॥

* भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥१९॥ *

विदेहानां देवानां भवप्रत्ययः, ते हि स्वसंस्कारमात्रोपयोगेन चित्तेन कैवल्यपदमिव अनुभवन्तः स्वसंस्कारविपाकं तथा जातीयकमतिवाहयन्ति । तथा प्रकृतिलयाः साधिकारे चेतसि प्रकृतिलीने कैवल्यपदमिव अनुभवन्ति यावन्न पुनरावर्त्तते अधिकारवशाच्चित्तमिति ॥ १९ ॥

भवो जन्म तदेव प्रत्ययः कारणं यस्येति विग्रहः । विदेहप्रकृतिलयानामिति विभज्य व्याचष्टे । विदेहानामिति । शरीरनिरपेक्षेण बुद्धिवृत्तिमन्तो विदेहा इति विभूतिपादे स्पष्टीभविष्यति । ते च महदादयो देवास्तेषां साधनानुष्ठानं विनैवासम्प्रज्ञातयोगो जन्ममात्रनिमित्तको भवति योनिसादृगुण्येनोत्पत्तिकज्ञानात् । ते हि दैनन्दिनप्रलये कदाचिच्च सर्गकालेऽपि स्वसंस्कारमात्रोपगतेन चित्तेन संस्कारशेषेण निरोधावस्थेन चित्तेन कैवल्यपदमिव प्राप्नुवन्तो व्युत्थानकाले च स्वसंस्कारस्य देवभावप्रापकसंस्कारस्य विपाकं फलमैश्वर्य्यं भोगं प्रारब्धकर्मयन्त्रिता अतिवाहयन्ति अतिक्रामन्ति ततो मुच्यन्त इति शेषः । तथा प्रकृतिलया इति । ईश्वरोपासनया प्रकृतिदेवतोपासनया वा ये ब्रह्माण्डं सावरणं त्यक्त्वा लिङ्गशरीरेण सह प्रकृत्यावरणे गताः तेऽत्र प्रकृतिलीनाः तेऽपि च असमाप्तकार्य्ये चेतसि स्वेच्छ-

थैव प्रकृतिलीने संस्कारशेषे सति असम्प्रज्ञातयोगि कैवल्यपद-मिव प्राप्नुवन्ति यावदधिकारशेषवशात् चित्तं पुनर्व्युत्थितं न भवति तस्यापि भवप्रत्यय इति शेषः। अधिकारसमाप्तौ च तेऽपि मुच्यन्त इत्याशयः। केचित्तु भवति अस्यामिति भवोऽविद्या, तथा चेदं सूत्रमिन्द्रियादिप्रकृत्यन्तचिन्तकानामविद्या-कारणकमसम्प्रज्ञातं वदन्तीत्याहुः। तन्न। परवैराग्यस्यासम्प्रज्ञात-हेतुतया तस्य अविदुषि असम्भवात्। यच्च वायुपुराणे

दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः।
भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः॥
बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः।
पूर्णं शतसहस्रन्तु तिष्ठन्त्यव्यक्तचिन्तकाः॥
निर्गुणं पुरुषं प्राप्य कालसंख्या न विद्यते।

इति वाक्यं, तद् इन्द्रियाद्युपासकानामनुत्पन्नज्ञानानां कर्म-देवानां तत्तत्पदावस्थितिकालमेव परिच्छिनत्ति न तु तेषामस-म्प्रज्ञातसमाधिकालान् देहाद्यभावेन वृत्त्यभावकालान् वा इन्द्रि-यादिचिन्तामात्रेणासम्प्रज्ञातानुपपत्तेः वृत्त्यभावस्य कादाचि-त्कस्य प्रलयमरणादितुल्यत्वेनापुरुषार्थत्वाच्च इन्द्रियाद्युपासका-नामिन्द्रियाद्यभिमानिसूर्य्यादिपदप्राप्तेरेवान्यत्र फलवत्त्वश्रवणा-च्चेति।

उपायप्रत्ययमसम्प्रज्ञातं तदधिकारिणश्चाह।

* श्रद्धावीर्य्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् ॥ २० ॥ *

उपायप्रत्ययो योगिनां भवति, श्रद्धा—चेतसः सम्प्रसादः। सा हि जननीव कल्याणी योगिनं

पाति, तस्य श्रद्दधानस्य—विवेकार्थिनो वीर्य्यमुपजायते, समुपजातवीर्य्यस्य स्मृतिरुपतिष्ठते, स्मृत्युपस्थाने च चित्तमनाकुलं समाधीयते, समाहितचित्तस्य प्रज्ञाविवेक उपावर्त्तते, येन यथावद्वस्तु जानाति, तदभ्यासात् तद्विषयाच्च वैराग्यादसम्प्रज्ञातः समाधिर्भवति ॥ २० ॥

ते खलु नव योगिनो मृदुमध्याधिमात्रोपाया भवन्ति । तद् यथा मृदूपायः, मध्योपायः, अधिमात्रोपाय—इति । तत्र मृदूपायोऽपि त्रिविधो मृदुसंवेगः मध्यसंवेगः तीव्रसंवेग इति । तथा मध्योपायः तथा अधिमात्रोपाय इति । तत्र अधिमात्रोपायानाम् ।

इतरेषां विदेहप्रकृतिलयातिरिक्तानां देवानां वा मनुष्यादीनां वा न जन्ममात्रादसम्प्रज्ञातो भवति किन्तु श्रद्धादिभ्यः प्रज्ञापर्य्यन्तेभ्य इत्यर्थः । संक्षेपतः सूत्रवाक्यार्थमाह । उपायेति। उपायः श्रद्धादिः । श्रद्धादीन् पञ्च क्रमेण व्याचष्टे । श्रद्धा चेतस इत्यादिना । सम्प्रसादः प्रीतिः योगो मे भूयादित्यभिलाषा । सा च समर्था मातेव योगिनं पाति प्रतिबन्धसहस्राणि तिरस्कृत्य रक्षति, यथा योगभङ्गो न भवतीत्यर्थः । श्रद्धातश्च वीर्य्यं भवतीत्याह । तस्य हीति । श्रद्दधानस्य विवेके जीवेश्वरान्यतरपुरुषतत्त्वज्ञाने योगसाधनेऽर्थितया वीर्य्यं प्रयत्नो धारणारूपो भवतीत्यर्थः । समुपजातेति । वीर्य्यतश्च स्मृतिर्ध्यानं ततश्च समाधिर्योगस्य चरमाङ्गं भवति । तदेवं श्रद्धामूलकात् धारणाद्यन्त-

रङ्गत्वयात् सम्प्रज्ञातयोगे जायमाने प्रज्ञा जीवब्रह्मान्यतरात्मतत्त्व-साक्षात्काररूपो विवेक उपावर्त्तते उपजायते येन विवेकेन यथार्थं वस्तु जानाति विषयीकरोति विद्वानित्यर्थः । तदेवं श्रद्धादीन् व्याख्याय तत्पूर्वकत्वमसम्प्रज्ञातस्य व्याचष्टे । तदभ्यासादिति । प्रज्ञाया अभ्यासात् तत्सिद्धया तद्विषयकादपि विरामप्रत्ययरूपादलम्बुद्धयाख्याद्वैराग्यादसम्प्रज्ञातो भवतीति सूत्रार्थः । आसन्नसमाधिसिद्धौ तु अतिशयेनोपायानुष्ठानं हेतुरिति सूत्रद्वयेन प्रतिपादनीयं, तयोरादिसूत्रमवतारयितुमुपक्रमते । ते खल्विति । उपायः श्रद्धादिः । तस्य मृदुत्वमल्पता, मध्यत्वं प्रसिद्धमेव, अधिमात्रत्वमतिप्रमाणता अतिशायितत्वमिति यावत् । संवेगश्चोपायानुष्ठाने शीघ्रता । कश्चित्तु संवेगो वैराग्यमिति व्याचष्टे । तन्न । योगिना नवधात्वानुपपत्तेः । उपायकार्य्यतया वैराग्यस्योपायमृदुत्वादिकं विहाय स्वातन्त्र्येण मृदुत्वाद्यसम्भवात् संवेगशब्दस्य वैराग्यवाचकत्वाभावाच्चेति । तथा मध्येति । मृदुसंवेगत्वादिरूपैस्त्रिविध इत्यर्थः । तथाधिमात्रोपाय इति । अधिकप्रमाणकोपायोऽपि मृदुसंवेगत्वादिरूपैस्त्रिविध इत्यर्थः । तत्र तेषु नवसु मध्ये, सूत्रेण सहान्वयः ॥ २० ॥

* तीव्रसंवेगानामासन्नः ॥ २१ ॥ *

**समाधिलाभः समाधिफलञ्च भवति इति ॥ २१ ॥**

नवयोगिमध्ये चरमाणामेवासन्नोऽसम्प्रज्ञातो भवतीत्यर्थः । समाधिलाभः, तन्निष्पत्तिः । न केवलं समाधिरासन्नोऽपि तु मोक्षोऽपीत्याह । समाधिफलं चेति । 'विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि' इत्यादिविष्णुपुराणादिभ्य इति भावः । अत्र कश्चित् अधिमात्रोपायानामिति सूत्रमध्ये न प्रवेशयति । तन्न ।

तथा सति संवेगस्य त्रिधा विभागेनैव सूत्रोपपत्तौ भाष्ये नवधा विभागप्रदर्शनवैयर्थ्यापत्तेः ॥ २१ ॥

* मृदुमध्याधिमात्रत्वात् ततोऽपि विशेषः ॥ २२ ॥ *

मृदुतीव्रो मध्यतीव्रो अधिमात्रतीव्र इति, ततोऽपि विशेषः। तद्विशेषात् मृदुतीव्रसंवेगस्य आसन्नः, ततो मध्यतीव्रसंवेगस्य आसन्नतरः, तस्मात् अधिमात्रतीव्रसंवेगस्य अधिमात्रोपायस्यापि आसन्नतमः समाधिलाभः समाधिफलञ्चेति ॥ २२ ॥

किमेतस्मादेव आसन्नतमः समाधिर्भवति? अथ अस्य लाभे भवति अन्योऽपि कश्चिदुपायो न वा इति,—

पूर्वसूत्रोक्तविशिष्टेऽन्तर्गतस्य तीव्रत्वस्य मृदुमध्यादिमात्रत्वेन त्रैविध्यात्ततोऽप्यासन्नादपि विशेषस्तरतमरूपो भवति। पूर्वसूत्रोक्तस्य नवमयोगिन इत्यर्थः। एतदेव व्याचष्टे ततोऽपि विशेष इत्यन्तेन भाष्येण। फलितार्थमाह। तद्विशेषादपीति। तस्माद्विशेषादपि नवमस्य त्रिविधस्यान्तिमानामासन्नतम इत्यर्थः। अपिशब्द आगामिसूत्रस्थसाधनापेक्षया। अत्र तीव्राधिमात्रसंवेगस्येत्यपपाठः। अधिमात्रतीव्र इत्युक्तभाष्यतोऽधिमात्रतीव्रसंवेगस्येत्येव पाठादिति। सूत्रान्तरमवतारयितुं पृच्छति। किमेतस्मादेवेति। किमेतस्मादेव तीव्रसंवेगस्याधिमात्रत्वादेवा-

सन्नतमः समाधिर्भवतीत्यादिरर्थः। न वेति वैकल्पिकत्वार्थः। विकल्पमेव सिद्धान्तयति सूत्रेण ॥ २२ ॥

* ईश्वरप्रणिधानाद्वा ॥ २३ ॥ *

प्रणिधानाद् भक्तिविशेषाद् आवर्जित ईश्वरस्तमनुगृह्णाति अभिध्यानमात्रेण, तदभिध्यानादपि योगिन आसन्नतमः समाधिलाभः फलं च भवति इति ॥ २३ ॥

अथ प्रधानपुरुषव्यतिरिक्तः कोऽयमीश्वरो नाम इति।

विशेष इत्यनेनान्वयः। प्रणिधानमत्र न द्वितीयपादवक्ष्यमाणं किन्तु असम्प्रज्ञातकारणीभूतसमाधिर्भावनाविशेष एव। तज्जपस्तदर्थभावनमित्यागामिसूत्रेणैवात्मप्रणिधानस्यात्र लक्षणीयत्वात्। तथा च सूत्रद्वयस्यायमर्थः। प्रज्ञान्तो यो योगोपायो जीवात्मपरमात्मसाधारणविषयक उक्तः तत्र जीवात्मप्रज्ञान्तस्योपायस्याधिमात्रतीव्रसंवेगत्वे सत्येवासन्नतमोऽसम्प्रज्ञातो भवति। परमात्मप्रज्ञान्तस्योपायस्य तु अधिमात्रतीव्रसंवेगत्वाभावेऽपि आसन्नतमोऽसम्प्रज्ञातो भवतीति। एवञ्च सति मुख्यकल्पानुकल्पभेदेन परमात्मजीवात्मप्रज्ञयोर्योगमोक्षहेतुत्वं बोध्यम्। उभयप्रज्ञयोरेव देहाद्यभिमाननिवर्त्तकत्वेन परवैराग्यद्वारकत्वसाम्येऽपि अतितीव्राभ्यासं विनापि परमात्मप्रज्ञाया आसन्नतमयोगहेतुतया श्रैष्ठ्यात्। 'ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च' इत्यागामिसूत्रेणाधिकद्वारकीर्त्तनात्। अत एव श्रुतिस्मृतीतिहासादिषु प्रायशो ब्रह्मज्ञानमेव मोक्षहेतुतयो-

पदिश्यते कदाचिदेव तु स्वातन्त्र्येण जीवतत्त्वज्ञानमिति। यदि च उभयोरेव तुल्यवद्विकल्पः स्यात्तर्हि "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" "तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैव सेतु"रित्यादिश्रुतयो व्याकुप्येरन्। तथा

स ईश्वरो व्यष्टिसमष्टिरूपो व्यक्तस्वरूपाप्रकटस्वरूपः।
सर्वेश्वरः सर्वविशेषवेत्ता समस्तशक्तिः परमेश्वराख्यः॥
प्रज्ञायते येन उदस्तदोषं शुद्धं परं निर्मलमेकरूपम्।
सन्दृश्यते वाप्यवगम्यते वा तज्ज्ञानमज्ञानमतोऽन्यदुक्तम्॥

इत्यादिस्मृतयोऽपि व्याकुप्येरन्। मुख्यकल्पत्वे तु राजमार्ग एव मम इति वाक्यवत् तादृशवाक्यानां मुख्यसाधनपरतयोपपत्तिरिति दिक्। ननु जीवप्रज्ञा आसन्नतमयोगोत्पादनार्थमभ्यासस्यातितीव्रत्वमपेक्षते ईश्वरप्रज्ञा तु नापेक्षते इत्यत्र का युक्तिरित्याशङ्कायामाह। प्रणिधानादित्यादि। ब्रह्मात्मना चिन्तनरूपतया प्रमलक्षणभक्तिरूपाद्वक्ष्यमाणात् प्रणिधानादावर्जितोऽभिमुखीकृत ईश्वरस्तं ध्यायिनमभिध्यानमात्रेण अस्य समाधिमोक्षौ आसन्नतमौ भवेतामितीच्छामात्रेण रोगाशक्त्यादिभिरुपायानुष्ठानमान्द्येऽप्यनुगृह्णाति आनुकूल्यं भजते अतस्तस्मादभिध्यानादपि प्रणिधाननिष्पत्त्यादिद्वारा योगिनामासन्नतमौ समाधिमोक्षौ भवत इत्यर्थः। ननु प्रधानपुरुषातिरिक्तं तत्त्वं नाप्नोति त्वयाप्यभ्युपगम्यते तत्र चेश्वरो न प्रधानं चेतनत्वाद्यभ्युपगमात्। नापि पुरुषः, सर्वेषां पुरुषाणां चिन्मात्रस्वरूपत्वेनेश्वरत्वानीश्वरत्वयोः स्वतोऽसम्भवात्। नहि वैशेषिकादिवत् नित्येच्छादिमान् स्वत एवेश्वरस्त्वयाप्यभ्युपगम्यते। औपाधिकत्वे तूपाधिमुक्त्या पुरुषाख्यजीवानामेवैश्वर्यमस्तु तत्परत्वेनैव श्रुतिस्मृत्युपपत्तेः। अतः प्रधानजीवातिरिक्त ईश्वरो

नास्तीति साङ्ग्याक्षेपनिरासकतयोत्तरसूत्रमवतारयति। अथ प्रधानेति। क इत्याक्षेपे। अथ वा प्रकृतिपुरुषातिरिक्तस्येश्वरस्य किं लक्षणमिति प्रश्नेन लक्षणसूत्रमुत्थापयति। अथ प्रधानेति॥ २३॥

* क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः॥ २४॥ *

अविद्यादयः क्लेशाः, कुशलाकुशलानि कर्माणि, तत्फलं विपाकः, तदनुगुणा वासना आशयाः,

ते च मनसि वर्त्तमानाः पुरुषे व्यपदिश्यन्ते स हि तत्फलस्य भोक्तेति, यथा जयः पराजयो वा योद्धृषु वर्त्तमानः स्वामिनि व्यपदिश्यते। यो ह्यनेन भोगेन अपरामृष्टः स पुरुषविशेष ईश्वरः।

कैवल्यं प्राप्तास्तर्हि सन्ति च बहवः केवलिनः। ते हि त्रीणि बन्धनानि छित्त्वा कैवल्यं प्राप्ता ईश्वरस्य च तत्सम्बन्धो न भूतो न भावी, यथा मुक्तस्य पूर्वा बन्धकोटिः प्रज्ञायते नैवमीश्वरस्य, यथा वा प्रकृतिलीनस्य उत्तरा बन्धकोटिः सम्भाव्यते नैवमीश्वरस्य, स तु सदैव मुक्तः सदैवेश्वर इति।

योऽसौ प्रकृष्टसत्त्वोपादानात् ईश्वरस्य शाश्वतिक उत्कर्षः स किं सनिमित्तः, आहोस्वित् निर्निमित्त इति। तस्य शास्त्रं निमित्तम्। शास्त्रं पुनः किं निमित्तं प्रकृष्टसत्त्वनिमित्तम्। एतयोः शास्त्रोत्कर्षयोः ईश्वरसत्त्वे वर्त्तमानयोः अनादिः सम्बन्धः। एतस्मादेतद् भवति सदैवेश्वरः सदैव मुक्त इति। तच्च तस्यैश्वर्य्यं साम्यातिशयविनिर्मुक्तं, न तावदैश्वर्य्यान्तरेण तदतिशय्यते, यदेवातिशयि स्यात् तदेव तत् स्यात्, तस्माद् यत्र काष्ठाप्राप्तिरैश्वर्य्यस्य स ईश्वरः। न च तत्समानमैश्वर्य्यमस्ति, कस्माद्, द्वयोः तुल्ययोः एकस्मिन् युगपत् कामितेऽर्थे नवमिदमस्तु पुराणमिदमस्तु इत्येकस्य सिद्धौ इतरस्य प्राकाम्यविघातादूनत्वं प्रसक्तं द्वयोश्च तुल्ययोर्युगपत् कामितार्थप्राप्तिः नास्ति अर्थस्य विरुद्धत्वात्, तस्माद् यस्य साम्यातिशयविनिर्मुक्तमैश्वर्य्यं स ईश्वरः स च पुरुषविशेष इति ॥२४॥

किञ्च।

पुरुषविशेष एवेश्वरः, तथा च ईश्वरस्य पुरुषेऽन्तर्भावस्तदुपाधेः प्रधान इति भावः। यच्चोक्तं सिद्धजीवमादायेश्वरप्रतिपादकश्रुतिस्मृत्योरुपपत्तिरिति तन्निराकरणार्थमपरामृष्ट इत्यन्तं

विशेषणम्। क्लेशाद्यपरामृष्टतया श्रुतिस्मृतिगीत ईश्वरो न सिद्धजीवो भवितुमर्हति कादाचित्कक्लेशादिसम्बन्धादित्यर्थः। अपरामृष्टान्तं विशेषणं व्याचष्टे। अविद्यादय इति। अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशा इति वक्ष्यति। कुशलाकुशलसाधनत्वात् कुशलाकुशलानि धर्माधर्माः तयोः क्लेशकर्मणोः फलं विपाकः स च जात्यायुर्भोगाः। भोगश्चात्र विषयसत्त्वादिभिश्चित्तपोषणं शब्दाद्याकारवृत्तिर्वा न तु सुखाद्यनुभवः, ते च मनसि वर्त्तमाना इति वक्ष्यमाणत्वात् स हि तत्फलस्य भोक्तेत्यनेन विपाकफलयोः सुखदुःखयोर्भोगस्य पुरुषे वक्ष्यमाणत्वाच्चेति। चित्तभूमौ शेरते इत्याशया वासनास्ताश्च विपाकानुगुणाः तत्कारणानि, यतस्तत्तच्छरीरसाध्यभोगवासनामुद्बोध्यैव कर्मणा विपाको दीयते इति। ननु क्लेशाद्यपरामृष्टत्वं सर्वपुरुषसाधारणमित्याशङ्क्याह। ते च मनसीति। एकस्यैवान्तःकरणस्य वृत्तिभेदाच्चातुर्विध्यमित्याशयेन पूर्वञ्च चेतस्युक्ता अविद्या अत्र मनस्युक्तेति बोध्यम्। तथा च अयमर्थः। ते च अविद्यादयो यद्यपि मनस्येव सन्ति न कुत्रापि पुरुषे तथापि पुरुषे सांसारिके व्यपदिश्यन्त इति। व्यपदेशवीजं स्वामित्वापरनामकं भोक्तृत्वमित्याह। स हीति। हि यस्मात् स पुरुषस्तस्य क्लेशादेः फलस्य सुखदुःखयोः स्वस्मिन् प्रतिविम्बितयोर्भोक्ता भवतीत्यर्थः। स्वामित्वसम्बन्धेनाधारत्व दृष्टान्तमाह। यथेति। तथा च राजा जयी पुरुषो धनीत्यादिवदेव पुरुषः क्लेशादिमान् सुखी दुःखी मूढ़ इत्यादिविद्वद्व्यवहार इति भावः। समवायसम्बन्धेन पुरुषे सुखादिमत्त्वबुद्धिरेवाविद्येति। एवञ्च सत्त्वाख्येन क्लेशसम्पर्केण शून्यता नान्यपुरुषेऽस्ति किन्तु ईश्वर एवेत्याह। यो हि अनेनेति। अनेन भोगेन क्लेशादिफलभोगेनेत्यर्थः। अत्र अनेनेति विशेषणादीश्वरस्य भोगोऽस्तो-

व्यवधार्य्यते । सर्वविवेकग्रहणे सत्येव स्वोपाधिसुख साक्षित्तामात्रं चिदवसानो भोग इति साङ्ख्यसूत्रात् । तथाच

उपद्रष्टानुमन्ता च भर्त्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥

इति गीताद्युक्तः परमेश्वरे भोग उपपद्यत इति । अतएवेश्वरस्यापि भोगप्रतिपादिका ऋतं पिवन्ताविति श्रुतिः यथाश्रुतैवोपपद्यते । अनश्नन्नन्यो अभिचाकशीति इति श्रुतिस्तु मुख्यमेव भोगं प्रतिषेधति, मुख्यभोगश्चाभिमानपूर्व्वकः सुखाद्यनुभवः, लोकैस्तत्रैव भोगव्यवहारात् सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोग इत्यागामिसूत्रेण तस्यैव लक्षयितव्यत्वात् । अथ वा जीवभोग्यदुःखादिभोक्तृत्वमेवानश्नन्निति-वाक्येन प्रतिषिध्यते । एकशरीरस्थत्वेन तद्भोगस्यैव प्रसक्तत्वादिति जीवन्मुक्तस्यापीश्वरसदृश एव भोगो दुःखभोगमात्रमीश्वरादिलक्षणमिति । अपरामृष्टत्वं परामर्शशून्यता, तत्र परामर्शशब्दफलं प्रतिपादयितुं शङ्कते । कैवल्यमिति । यदि क्लेशादिशून्य ईश्वरः श्रुतिस्मृतिभ्य एष्टव्यस्तर्हि कैवल्यं ज्ञानं प्राप्ता बहवो हिरण्यगर्भादयः केवलिनः केवलानां जीवन्मुक्तानामध्यक्षाः क्लेशादिशून्याः सन्ति त एवेश्वरतया श्रुत्यर्थाः सन्त्विति पूर्व्वपक्षिणो भावः । तथा च साङ्ख्यसूत्रं 'मुक्तात्मनः प्रशंसासिद्धस्य वे'ति । "आद्यस्तु मोक्षो ज्ञानेन द्वितीयो रागसङ्क्षयात् । कृच्छ्रक्षयात्तृतीयस्तु व्याख्यातं मोक्षलक्षणम्" इति पञ्चशिखाचार्य्यधृतवाक्ये च ज्ञानस्यापि कैवल्यमोक्षादिशब्दार्थत्वात् हिरण्यगर्भादयोऽपि कैवल्यमुक्त्यादिमन्त उच्यन्ते । केवलिन इति पाठे केवलस्यायमिति कैवलोऽत्र द्वितीयमोक्षो रागादिक्लेशशून्यतेति । परिहरति । ते हीति । ते हि हिरण्यगर्भादयः प्राकृतिकानि बन्धनानि पूर्व्वस्थितानि छित्त्वैव मुक्ताः न तु

क्लेशादिपरामर्शशून्याः, ईश्वरस्तु सर्वदैव क्लेशात्मकबन्धनत्रय-शून्यतया श्रुत्यादिसिद्ध इत्यर्थः। ईश्वरस्य सदा क्लेशादिशून्यत्वे मानम्

तत्र यः परमात्मा हि स नित्यं निर्गुणः स्मृतः।
कर्मात्मा पुरुषो योऽसौ मोक्षबन्धैः स युज्यते॥

इत्यादिवाक्यशतानि। निर्गुणो गुणाभिमानशून्यः गीतायां गुणाभिमानशून्यतयैव गुणातीतत्ववचनात्। 'परस्तु निर्गुणः प्रोक्तो ह्यहङ्कारयुतोऽपर' इति नारदीयादिष्वपि ईश्वरजीवयोरिच्छादिसाम्येऽपि तदनभिमानाभिमानाभ्यां निर्गुणसगुणत्वसिद्धेश्च। बन्धनत्रयं चोक्तं साङ्ख्ये, प्रकृतिलयानां प्राकृतिको बन्धः। विदेहानां वैकारिको बन्धः। दिव्यादिव्यविषयभाजां दक्षिणाबन्धः। तत्राद्योऽष्टप्रकृतिष्वभिमानरूपः। द्वितीयः शब्दादिविषयरागः। तृतीयो गृहस्थानां कर्मदक्षिणादानाध्ययनादिष्वनुरागः। तथा चोक्तम् 'प्रकृतेर्वैव बन्धेन तथा वैकारिकेण च। दक्षिणाभिस्तृतीयेन बद्धो जन्तुर्विवर्त्तते' इति। ईश्वरस्य क्षुद्रेश्वरेभ्यो वैलक्षण्यं बन्धापरामर्शरूपं विवृणोति। यथा मुक्तस्येति। निरस्ताविद्यस्येत्यर्थः। प्रज्ञायते निश्चीयते सम्भाव्यत इति प्रकृतिलीनस्याभिमानसम्बन्धेन पश्चाद्बन्धसम्भावनेति भावः। सदैवमुक्त इति। दुःखशून्य इत्यर्थः। सदैवेश्वर इति। सदैवाप्रतिहतेच्छया युक्तः। अत्र केचित् सदैवेश्वर ऐश्वरशक्तिमानित्यर्थः। न हि वेदान्तिभिरिव प्रलये योगैरपि ईश्वरस्य नित्यमिच्छादिकमभ्युपगन्तुं शक्यते प्रकृतेर्गुणसाम्यरूपत्वाभ्युपगमविरोधात् इत्येकदेशिनः। तन्न। यतो 'नैवाहस्तस्य न निशा नित्यस्य परमात्मन' इत्यादिवाक्यशतैरीश्वरसत्त्वस्य नित्यमेव ज्ञानेच्छादिकं यथाश्रुतभाष्यानुरोधाच्च विसदृशपरिणामाभावरूपा च साम्यावस्था नित्येच्छेत्यादिमन्नित्यसत्त्व-

व्यक्तिमत्त्वेऽप्युपपद्यत इति स्वकार्य्याकरणमेव च तस्य द्विपरा-र्द्धान्तलय इति, किं बहुना 'आत्मा वा इदमेक एवाग्र आसी-न्नान्यत् किञ्चन मिषदि'ति श्रुत्या प्राक्लये परमात्मनोऽर्थद्रष्टृत्वं सिद्धमत ईश्वरोपाधेर्ज्ञानलक्षणा वृत्तिः प्रलयेऽप्यस्ति न चोपा-धिवृत्तिं विनैवेशस्य ज्ञातृत्वमेष्टव्यं बाधकं विना दृष्टानुसार-त्यागानौचित्यात्। ज्ञानशक्तिरहं परेति प्रकृत्यभिमानिदेवता-वाक्यविरोधाच्च। किं चेतत् 'तमो वा इदमेकमास तत्परे स्यात् तत्परेणेरितं विषमत्वं प्रयाती'त्यादिश्रुतिष्वेव परमेश्वरप्रयत्ने-नैव गुणवैषम्यं श्रूयते, तथा।

प्रकृतिं पुरुषञ्चैव प्रविश्यात्मेच्छया हरिः।
क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ॥

इत्यादिना प्रकृतेर्वैषम्यहेतुः क्षोभोऽपीश्वरेच्छात एव। स्मर्य्यते च, अतः साम्यावस्थायामप्यगत्या ईश्वरोपाधेर्ज्ञानादि स्वीकार्य्यमिति। अपि च एवं सति प्रलये स्वसङ्कल्पेन स्वोपाधिं स्वस्माद्वियोज्य ईश्वरः शेते पूर्वसर्गीयसङ्कल्पसंस्काराभ्याञ्च सर्गा-दावुपाधिरीश्वरेण सह स्वयं संयुज्यत इत्यभ्युपेयं, तच्च अयुक्तं तस्य हेतुरविद्येत्यागामिसूत्रेणाविद्याया बुद्धिपुरुषसंयोगहेतुत्व-वचनेनेश्वरस्याप्यविद्वत्त्वापत्तेः। न च आहार्य्यज्ञानरूपोऽविद्यया संयोगः स्यात् सा च अविद्या मायेति न तस्याः क्लेशत्वमिति वाच्यम्। संयोगहेत्वविद्याया विवेकख्यातिनाश्यत्वबोधकसूत्र-विरोधात्। किञ्च सूत्रकारेण

क्लेशकर्मविपाकाद्यैर्वासनाभिस्तथैव च।
अपरामृष्टमेवाह पुरुषं ह्यीश्वरं श्रुतिः॥

इति योगियाज्ञवल्क्यादिभिश्चेश्वरोपाधौ संस्कारस्य प्रति-षिद्धत्वात् तदभ्युपगमोऽपि तेषामपसिद्धान्त एव, तथा आगा-मिसूत्रप्रतिषिद्धं कालावच्छिन्नत्वं च ईशे स्यात् उपाधिवृत्त्य-

भविनैव चेतनस्य कालानवच्छिन्नत्वात् इत्यादीनि अत्र दूषणानि सन्ति, तस्मात् प्रलये निरुद्धोऽप्युपाधिः पूर्वसर्गीयसङ्कल्पवासनाभ्यां स्वयं व्युत्थितो भवतीति यच्छास्त्रं तद्दैनन्दिनप्रलये योगनिद्रया शयानस्य स्वयम्भोरुपाधिपरमेव न परमेश्वरोपाधिपरमिति दिक्। शास्त्रप्रामाण्यसिद्धौ शास्त्राद्यथोक्तेश्वरसिद्धिरीश्वरसिद्धौ चेतत्प्रत्यक्षपूर्वकतया शास्त्रप्रामाण्यसिद्धिरित्यन्योन्याश्रयं मन्वानो नास्तिक ईश्वरे प्रमाणमस्ति न वेति पृच्छति। योऽसाविति। सर्वपुरुषाणां स्वत एकरूपतयैश्वर्य्यमुपाधिधर्म एवेति प्रतिपादयितुं प्रकृष्टसत्त्वोपादानादित्युक्तं, प्रकृष्टसत्त्वसम्बन्धात् तदौपाधिकः शाश्वतिको नित्य उत्कर्ष ऐश्वर्य्यमित्यर्थः। ईश्वरस्य च उपाधौ प्रमाणं 'कार्य्योपाधिरयं जीवः कारणोपाधिरीश्वर' इति श्रुत्यादयः। 'तदैक्षत' 'सोऽकामयत' 'तदात्मानं स्वयमकुरुत' 'स एको ब्रह्मण आनन्द' इति श्रुत्याद्युक्तस्य ब्रह्मणि स्वतोऽनुपपत्तिश्च। 'साक्षी चेता केवलो निर्गुणश्चे'त्यादिश्रुतिभिरीश्वरस्य निर्गुणत्वचिन्मात्रत्वसिद्धेरिति। सनिमित्तकः सप्रमाणकः। उत्तरं, तस्य शास्त्रं निमित्तमिति। शास्त्रं श्रुतिस्मृतीतिहासपुराणानि। पुनः पृच्छति। शास्त्रं पुनरिति। शास्त्रस्यैव प्रामाण्यं कुत इत्यर्थः। उत्तरं, प्रकृष्टसत्त्वनिमित्तमिति। ईश्वरस्योपाधिर्यत्प्रकृष्टसत्त्वं तत्प्रत्यक्षरूपवाक्यार्थज्ञानजन्यत्वात् शास्त्रस्य प्रामाण्यमित्यर्थः। ननु एवमन्योन्याश्रयः शास्त्रप्रामाण्ये सिद्धे प्रकृष्टसत्त्वसिद्धिः तत्सिद्धौ च तन्मूलकतया शास्त्रप्रामाण्यसिद्धिरिति चेन्न। मन्त्रायुर्वेदप्रामाण्यत ईश्वरसिद्धेः प्रागेव प्रामाण्यसिद्धेः प्रकृष्टसत्त्वस्य च शास्त्रप्रामाण्यनिर्वाहकतामात्रमत्रोक्तमिति। तथा च न्यायसूत्रं 'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्य'मिति। एतयोरिति। विषयत्वेन समवायसम्बन्धेन

च परमेश्वरसत्त्वे वर्त्तमानयोरेतयोः शास्त्रोत्कर्षयोरनादिनिमित्तनैमित्तिकभावः सम्बन्धः शास्त्रं नैमित्तिकं सत्त्वोकर्षस्य निमित्तं कारणत्वादित्यर्थः। ततः किमित्याकाङ्क्षायामाह। तस्मादिति। सदैवेश्वरः प्रलयेऽपि ज्ञानेच्छाकृतिमान् सदैव मुक्तोऽनादिकाले क्लेशादिमुक्तश्चेत्यर्थः। ईश्वरस्याद्वितीयत्वमपि प्रतिपादयति। तच्चेति। नास्ति साम्यमतिशयश्च यस्मात् तादृशमित्यर्थः। अतिशयनिर्मुक्तौ हेतुमाह। न तावदिति। उक्ते हेतुमाह। यदेवेति। यस्माद्वेतोर्यदेवातिशयि निरतिशयं तदेव तत् ऐश्वर्य्यं स्यादिति योजना। सातिशयत्वे सत्यैश्वर्य्यमेव न भवति अप्रतिहतेच्छत्वस्यैवाभावात्। अतो यदेव निरतिशयि तदेव मुख्यमैश्वर्य्यमित्यर्थः। उपसंहरति। तस्मादिति। ऐश्वर्य्येण यत्र काष्ठा प्राप्यते स ईश्वर इत्यर्थः। साम्यनिर्मुक्तौ हेतुमाह। न चेति। द्वयोरिति। नवमल्पकालस्थायि पुराणं दीर्घकालस्थायि। एवमस्त्वित्येवंरूपेणैकस्मिन्नर्थे क्वचिद्द्वाभ्यां तुल्याभिमताभ्यां कामिते सति एकस्य सिद्धौ सङ्कल्पसिद्धावितरस्येच्छाविघातादूनत्वं न्यूनत्वं स्यादतो न समानानेकेश्वरसम्भव इत्यर्थः। ननूभयोः सङ्कल्पान्नवत्वं पुराणत्वं चोभयमेव भवतु तत्राह। द्वयोश्चेति। तस्य पुरुषविशेषत्वमुपसंहरति। स चेति। स्यादेतत्। यदि प्रकृष्टसत्त्वोपादानादेव शाश्वतिको जीवेभ्य उत्कर्षश्चेतनविशेषस्य त्वयाऽप्यभ्युपगतस्तथा जीवानामप्यपकर्षो मलिनकार्य्यसत्त्वनिमित्तक इत्यर्थादागतः। तथा च श्रुतिरपि 'कार्य्योपाधिरयं जीवः कारणोपाधिरीश्वर' इति। तर्हि किमर्थं पुरुषविशेष ईश्वर इत्युच्यते एकस्यैवात्मन आकाशस्येवोपाधिभेदैर्जीवेश्वरादिविभागसम्भवेन लाघवादैकात्म्यकल्पनस्यैवौचित्यात्' 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'आकाशमेकं

हि यथा घटादिषु पृथग्भवेत्। तथात्मैको ह्यनेकश्च जलाधारेष्विवांशुमानि'त्यादिश्रुतिस्मृतिशतैरात्मैक्यस्यैव प्रतिपादितत्वाच्च। भेदाभेदोभयश्रुतिस्मृतिमध्ये भेदनिन्दया अभेदज्ञानस्य मोक्षफलकत्वकथनेन च अभेदवाक्यान्येव स्वार्थपराणि भेदवाक्यानि त्वनुवादमात्राणीति। अत्रोच्यते। जीवेश्वरयोरंशांशिनोस्तावद्व्याप्यव्यापकभावस्वीकारेण जीवोपाधिना अवच्छेद्यस्यात्मप्रदेशस्येश्वरोपाध्यवच्छिन्नत्वं वक्तव्यं, तथा च यथा ब्रह्माण्डाकाशस्य गर्दभमुखावच्छेदेन दुःखरत्वं यथा वा पायुवच्छेदेनौपाधिकं दुर्गन्धत्वमेवं कारणसत्त्वावच्छिन्नचिदाकाशस्यापीश्वरस्य जीवोपाध्यवच्छेदेन संसारित्वं स्यात्। यदि च जीवेश्वरौ चैतन्यस्यैवांशौ न तु जीव ईश्वरस्य साक्षादंशो ऽतो घटकुण्डाकाशवदेवान्योन्यव्यावृत्तौ जीवेश्वरौ स्वीक्रियेतां तदापीश्वरस्य जीवान्तर्यामित्वानुपपत्तिः जीवप्रदेशेऽपीश्वरासत्त्वादिति। एवमिव सर्वजीवानामप्यैक्यं न सम्भवति एकस्यैव चिदाकाशस्यैकान्तःकरणाद्विमुक्तेऽपि प्रदेशे संसार्यन्तःकरणान्तरसम्बन्धात् बन्धप्रसङ्गेन श्रुत्युक्तबन्धमोक्षादिव्यवस्थानुपपत्तेः, न हि आकाशस्य भग्नघटप्रदेशेषु अन्यघटसम्बन्धो न भवतीति नियमः सम्भवति प्रत्यक्षविरोधात् पर्य्यायैश्चैकस्मिन्नेव देशेऽनेकलिङ्गदेहसम्बन्धस्य समानदेशीयभोगेनानुमानाच्च। तदेतदुक्तं कपिलाचार्य्यैः। 'जन्मादिव्यवस्थातः पुरुषबहुत्वम् उपाधिभेदेऽप्येकस्य नानायोग आकाशस्येव घटादिभि'रित्यादिसूत्रैरिति। ननूपाधिविशिष्टयोरेव जीवेश्वरत्वे वक्तव्ये इति चेत्, न। विकल्पासहत्वात् विशिष्टानतिरेके जीवेश्वरत्वबन्धमोक्षादिसाङ्कर्य्यतादवस्थ्यात्। अतिरेके तु तदनित्यं नित्यं वा। आद्ये विनाशितया तस्य बन्धमोक्षाद्यनुपपत्तिः। अन्त्ये वृश्चिकभिया पलायमानस्याशीविषमुखनिपातः। यदि हि विशिष्टा अनेके आत्मानः

कल्पनीयास्तर्हि अस्मासु उपन्यस्तगौरवं भवतामप्यापतितमधिकन्तु सामान्यैकात्मकल्पनमिति। न च आत्माद्वैतश्रुत्यनुरोधेन तदप्युचितमिति वाच्यम्। विशिष्टात्मभ्यः सामान्यात्मनोऽत्यन्तभेदे तत्त्वमस्याद्यभेदवाक्यानुपपत्तितादवस्थ्यात्। अत्यन्तमभेदे च विशिष्टातिरिक्तताविरोधात्। भेदाभेदे चास्मन्मतप्रवेशादिति, अस्माभिरपि हि सामान्यरूपेणाभेदो वैधर्म्यलक्षणभेदनिरासायेष्यते विशेषतस्तु भेद इति। तथा चोक्तं कपिलाचार्य्यैः। 'न अद्वैतश्रुतिविरोधो जातिपरत्वा'दिति। एवं तावदवच्छेदवादो निरस्तः। प्रतिविम्बवादस्तु अत्यन्तं विकल्पासहः। प्रतिविम्बस्य तुच्छत्वे प्रतिविम्बरूपजीवस्य ब्रह्मणा सहाभेदानुपपत्तिः सदसतोरभेदानुपपत्तेः। अतुच्छत्वे च आत्मनानात्वस्य शब्दभेदेन स्वीकारापत्तिरद्वैताद्यनुपपत्तिश्चेति। अत्र च मूढ़ानामुपर्य्युपरि कक्षाः ब्रह्ममीमांसाभाष्येऽस्माभिर्निराकृताः। तत्त्वमस्यादिवाक्यानि तत्र विस्तरेण व्याख्यातानि सङ्क्षेपतस्तु अत्रापि व्याख्यास्यामः। न्यायानुग्रहेण बलवद्भिरग्निविस्फुलिङ्गादिभिः सांशदृष्टान्तैः विरोधाद्दाकाशसूर्य्यादिदृष्टान्ता अखण्डतापरा न भवन्ति किन्तु ब्रह्मणि सर्वजीवानामविभागलक्षणाभेदस्य सर्वकालस्थायितया पारमार्थिकत्वेऽपि यत्किञ्चिदवच्छेदेन फेनबुद्बुदादिवत् अतिभङ्गुरस्य विभागलक्षणभेदस्यापारमार्थिकस्यौपाधिकत्वमात्रं प्रतिपादयन्तीति। एतेन भेदनिन्दावाक्यानि प्रकरणभेदैर्विभागवैधर्म्यादिभेदपराण्येव। यच्चोक्तमभेदज्ञानात् मोक्षः श्रूयत इति तत्परम्परयैव न तु साक्षात्। अथात आदेशो नेति नेति न हि एतस्मादिति नेत्यतत्परमस्ति

प्रधानपुरुषव्यक्तकालानां परमं हि तत्।
पश्यन्ति सूरयः शुद्धं तद्विष्णोः परमं पदम्॥

इत्याद्यैः श्रुतिस्मृतिवाक्यैर्विवेकाख्यभेदज्ञानस्यैव मुख्यत्वात्।

परमात्मात्मनोर्योगः परमोऽर्थं इतीष्यते ।
मिथ्यैतदन्यद् द्रव्यं हि नैत्यन्यद्रव्यतां यतः ॥

इति विष्णुपुराणादिषु अत्यन्ताभेदस्यापि निन्दितत्वाच्चेति । किं बहुना

अन्यश्च राजन् ! प्रवरस्तथान्यः पञ्चविंशकः ।
तत्स्थत्वाच्चानुपश्यन्ति एक एवेति साधवः ॥

इति मोक्षधर्मादिषु अन्योन्याभावाविभागरूपतयैव भेदाभेदयोर्व्याख्यातत्वेन भेदवाक्याभेदवाक्ययोरर्थनिर्णये न आधुनिककुतर्कापेक्षेति दिक् । पुरुषान्तरेभ्य ईश्वरस्य निरतिशयसार्वज्ञरूपविशेषान्तरं प्रतिपादयन् सूत्रमवतारयति । किञ्चेति ॥ २४ ॥

* तत्र निरतिशयं सर्वज्ञबीजम् ॥ २५ ॥ *

यदिदमतीतानागतप्रत्युत्पन्नप्रत्येकसमुच्चयातीन्द्रियग्रहणमल्पं बहु इति तत् सर्वज्ञबीजम् । एतद्धि वर्द्धमानं यत्र निरतिशयं स सर्वज्ञः । अस्ति काष्ठाप्राप्तिः सर्वज्ञबीजस्य सातिशयत्वात् परिमाणवदिति । यत्र काष्ठाप्राप्तिः ज्ञानस्य स सर्वज्ञः, स च पुरुषविशेष इति, सामान्यमात्रोपसंहारे कृतोपक्षयम् अनुमानं न विशेषप्रतिपत्तौ समर्थम् इति तस्य संज्ञादिविशेषप्रतिपत्तिरागमतः पर्य्यन्वेष्या । तस्य आत्मानुग्रहाभावेऽपि भूतानुग्रहः प्रयोजनम्, ज्ञान-

**धर्मोपदेशेन कल्पप्रलयमहाप्रलयेषु संसारिणः पुरुषानुद्धरिष्यामीति। तथा चोक्तम् "आदिविद्वान्निर्माणचित्तमधिष्ठाय कारुण्याद्भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाच" इति॥ २५॥**

वीजं लिङ्गं सर्वज्ञानुमापकं वच्यमाणं यत् सातिशयजातीयं ज्ञानं तत् तत्रेश्वरे निरतिशयमित्यर्थः। सार्वज्ञवीजमिति पाठेऽप्ययमेवार्थः। यत् वीजं कारणं, तथा च सर्वज्ञत्वकारणं सत्त्वमिति तस्यार्थ इति कश्चित्। तन्न। ज्ञानस्य बह्वल्पतयोरेव वीजतया अत्र भाष्यकारैर्व्याख्यास्यमानत्वादिति, व्याचष्टे। यदिदमिति। यत् अतीतानागतवर्त्तमानानां प्रत्येकसमुच्चितानामतीन्द्रियार्थानामल्पं बहु इति ग्रहणं ज्ञानमिदं सर्वज्ञवीजमित्यर्थः। कथं वीजं तदाह। तदिति। एतत् सर्वज्ञवीजं सातिशयज्ञानं विवर्द्धमानं यत्र निरतिशयं भवति स सर्वज्ञोऽन्यथानवस्थानादिति युक्तिरुक्ता। प्रयोगमप्याह। अस्तीति। सर्वज्ञवीजं सातिशयज्ञानं क्वचित् प्राप्तकाष्ठं सातिशयत्वात् परिमाणवदित्यर्थः। अत्र बाधकाभावे सतीति हेतुर्विशेषणीयस्तेन गुरुत्वसंस्काररूपादिषु न व्यभिचारस्तेषां चैकत्र काष्ठाप्राप्तौ कार्य्यमात्रे अतिशयित्वमेव बाधकं सामग्र्यास्तारतम्याव्यवस्थित्या कार्य्यतारतम्ये व्यवस्थानुपपत्तेः। ज्ञानेच्छापरिमाणानान्तु नित्यानामपि सिद्धतया क्वचित् काष्ठाप्राप्तौ नास्ति बाधकम्। वस्तुतस्तु यथाश्रुतभाष्यादनवस्थापत्तेश्च गुरुत्वादिषु अप्यतिशयानां क्वचित्काष्ठानुमीयते सामग्रीतारतम्यकाष्ठाया अप्यनवस्थाभयस्यैवानुमानसाम्यात् अतो न हेतौ विशेषणापेक्षेति। अस्मिंश्चा-

नुमाने श्रुत्यादिस्तर्क इति, सूत्रतात्पर्य्यमाह। यत्रेति। ननूक्तानुमानेन सामान्यतः सर्वज्ञपुरुषसिद्धावपि तस्य संज्ञाविशेषः कथमवधार्य्येत इत्याकाङ्क्षायामाह। सामान्येति। सामान्यमात्रेणोपसंहारे निश्चये कृतपर्य्यवसानमनुमानं न संज्ञादिविशेषप्रतिपादनक्षममित्यत इत्यादिरर्थः। संज्ञा ब्रह्मान्तर्य्यामिपरमात्मादिरूपा आदिशब्देन पूर्णानन्दत्वपरमकारुणिकत्वपारमार्थिकात्मत्वजगदाधारकारणत्वादयो ग्राह्याः। हरिहरादिसंज्ञामूर्त्तयस्तु शक्तिशक्तिमदाद्यभेदेनोपासनार्थमेव परमेश्वरस्योच्यन्ते न तु साक्षादेव।

ब्रह्मविष्णुशिवा ब्रह्मन्! प्रधाना ब्रह्मशक्तयः।
ततो न्यूनाश्च मैत्रेय! देवा दक्षादयस्ततः॥
ब्रह्मविष्णुशिवादीनां यः परः स महेश्वरः।

इत्यादिवाक्येभ्यः। आगमतो वेदान्ततः। यत्तु आधुनिकाः केचन परस्य साक्षादपि लीलाविग्रहं कल्पयन्ति। तदप्रामाणिकं विष्णादीनामेव लीलावतारश्रवणात्। विष्णादीनाञ्च परमात्मन्येवाहम्भावात्तेषामवतारा एव परमेश्वरावतारतया श्रुतिस्मृतिषु उच्यन्ते तेन तु ते भ्रान्ताः 'न तस्य कार्य्यं करणञ्च विद्यते' इत्यादिश्रुतिभ्यः परमेश्वरस्य कार्य्यकारणाख्यशरीरद्वयप्रतिषेधात्। 'अनादिमत्परं ब्रह्म सर्वदेहविवर्जित'मित्यादिस्मृतिभ्यश्चेति दिक्। ननु नित्यमुक्तश्चेदीश्वरस्तर्हि पुरुषार्थाभावात् तस्य प्रवृत्तिर्न घटते। तथा च साङ्ख्यसूत्रं 'स्वोपकारादधिष्ठानं लोकव'दितीति पूर्वपक्षः। तन्न। प्रवृत्त्यादिनित्यत्वात् तत्र निमित्तापेक्षा नास्तीति मुख्यसमाधाने सत्यपि प्रौढ्या प्रकारान्तरेणापि समाधानमाह। तस्य आत्मेति। आत्मानुग्रहः स्वोपकारः। तस्येश्वरस्य स्वोपकाराभावेऽपि भक्तान् पुरुषान् उद्धरि-

ष्यामीत्याशयेन ज्ञानधर्मयोरुपदेशतो भक्तभूतानुग्रहः प्रयोजनं, पुरुषाणां विशेषणं कल्पेत्यादि । कल्पप्रलयेषु दैनन्दिनप्रलयेषु महाप्रलयेषु प्राकृतप्रलयेषु च संसारिणः स्वकारणगामिनोऽतस्तदा मरणदुःखभाज इत्यर्थः । ननु स्वेष्टसाधनताज्ञानाभावे कथं व्यापारः स्यादिति चेन्न । तृणारणिमणिन्यायेन स्वेष्टसाधनताज्ञानपरदुःखज्ञानयोर्विजातीयेच्छाद्वयं प्रत्येव फलबलेन हेतुतायाः क्लृप्तत्वात् । तथा च ब्रह्मसूत्रं 'लोकवत्तु लीलाकैवल्यम्' इति । ननु तथापि भक्तानेवानुगृह्णाति नान्यान् प्रत्युत तान्निगृह्णात्यपि स्वभक्तेश्वर्य्यदानेनेत्यतो वैषम्यादिना न ईश्वरस्य नित्यमुक्तत्वं भवतीति चेत् । मैवम् । अग्नेरौष्ण्यस्वाभाव्यवत् विशुद्धसत्त्वे भक्तवशतास्वभावस्यापर्य्यनुयोज्यत्वात् । वैषम्यं च रागद्वेषाभ्यामेव भवति न तु प्रवृत्तिमात्रेणेति । अत एव गीता

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥

इति । यच्च हिरण्यगर्भाद्यैश्वर्य्यदानात् अन्येषां दुःखं भवति तत्रापि हिरण्यगर्भादीनामेव वैषम्यं वीजम् । ईश्वरस्य तु परदुःखप्रहाणेच्छा विद्यमानापि भक्तवशतया कुण्ठिता स्वकार्य्याय विलम्बत इति सर्वं समञ्जसम् । यच्च सर्वेश्वरस्य कर्म्मसापेक्षतया वैषम्यं नैर्घृण्यञ्च ब्रह्ममीमांसासूत्रेणापाकृतं तत्राप्ययमेवाशयः । लोकानां विहितनिषिद्धरूपाणि कर्माणि देवानां सुखदुःखसाधनानि अत ईश्वरेण स्वभक्तदेवेषु अपराद्धाय यत् दुःखं दीयते अनपराद्धाय सुखं तद्भक्तपारवश्यनिमित्तकमिति । स्वप्रयोजनाभावेऽपि विदुषां प्रवृत्तौ पञ्चशिखाचार्य्यवाक्यं सांख्यस्थं प्रमाणयति । तथा चोक्तमिति । आदिविद्वान् स्वयम्भूः सर्गादावाविर्भूतो विष्णुर्निर्माणचित्तं योगबलेन स्वनि-

मितं चित्तमधिष्ठाय स्वांशेन प्रविश्य कपिलाख्यपरमर्षिर्भूत्वा कारुण्यात् जिज्ञासवे आसुरये तत्त्वं प्रोवाचेत्यर्थः ॥

परमेश्वरस्यापरं विशेषं प्रतिपादयति सूत्रकारः ॥

***स एष पूर्वेषामपि गुरुः कालेनाऽनवच्छेदात् २६***

**पूर्वे हि गुरवः कालेनावच्छेद्यन्ते, यत्रावच्छेदार्थेन कालो नोपावर्त्तते स एष पूर्वेषामपि गुरुः, यथा अस्य सर्गस्य आदौ प्रकर्षगत्या सिद्धस्तथा अतिक्रान्तसर्गादिषु अपि प्रत्येतव्यः ॥२६॥**

पूर्वेषां पूर्वपूर्वसर्गाद्युत्पन्नानां ब्रह्मविष्णुमहेश्वरादीनामपि गुरुः पिता अन्तर्य्यामी विद्यया ज्ञानचक्षुःप्रदश्च । कुतः कालेनानवच्छेदात् । ब्रह्मादयोहि द्विपरार्द्धादिकालेनावच्छिन्नाः कालानवच्छिन्नं गुरुं विना न सम्भवन्तीत्यर्थः । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इत्यादिश्रुतिभ्य इति भावः । न च प्रकृतिस्वातन्त्र्यात्क्षतिः । निमित्तमप्रयोजकं प्रकृतीनामित्यागामिसूत्रात् निमित्तकारणस्येश्वरादेस्तत्स्वातन्त्र्यविघातकत्वात् । एतदेव व्याचष्टे । पूर्वे हीति । अवच्छेदप्रव्दार्थेनावच्छेदप्रयोजनेन कालो नोपावर्त्तते न सम्बध्यते । तात्पर्य्यार्थमाह । यथास्येति । अस्य वर्त्तमानस्य सर्गस्यादौ पूर्वं प्रकर्षगत्या ज्ञानोत्कर्षप्राप्त्या स्वतः सिद्ध इत्यर्थः । अत्रेश्वरस्य सर्वजीवपितृत्ववचनात् श्रुत्युक्ताग्निविस्फुलिङ्गदृष्टान्तानुसारेण च जीवब्रह्मणोरंशांशिभावस्तयोरभेदश्च पितापुत्रवदेवेति भावः । तथा च स्मृतिः ।

यथा दीपसहस्राणि दीप एकः प्रसूयते ।
तथा जीवसहस्राणि स एवैकः प्रसूयते ॥

ज्ञानमित्यायातम्। यतोऽतद्रूपप्रतिष्ठमेव मिथ्याज्ञानमिति, तदा च सर्वस्य मिथ्याज्ञानत्वे सम्यग्ज्ञानमपि किं स्यात्, न स्यादेव विषयाभावेन क्वापि ज्ञानस्य सद्विषयकत्वासिद्धेरित्यर्थः। तत्र हेतुः यद्यदिति। नन्ववयवज्ञानस्य सम्यग्ज्ञानत्वं स्यादिति चेन्न। सूक्ष्मश्चेत्यादिना अवयवानामप्रत्यक्षत्वस्योक्तत्वात्। अप्रत्यक्षेष्ववयवेषु लिङ्गं चावयव्येव तस्याभावात् पूर्वावयवज्ञानं प्रमाणाभावादेवासिद्धमित्याशयः। ज्ञानज्ञानस्य सम्यग्ज्ञानत्वं कदाचित् स्यादित्याशयात् प्रायेणेत्युक्तम्। अवयव्यभावे सङ्घाताश्रितत्वेन परैरभ्युपगतस्य ज्ञानस्यापि रूपादिवन्मिथ्यात्वे सर्वं ज्ञानं भ्रमो ज्ञानत्वादित्यनुमानसम्भवाच्चेति। स्वसिद्धान्तमुपसंहरति। तस्मादिति। सवितर्कायाः कदाचित् विकल्पेनाप्युपपत्तिरित्याशयेन निर्वितर्काया इत्युक्तम्। तदेवं स्थूलविषये सूत्रद्वयेन समापत्तेर्द्विधा विभागं कृत्वा सूक्ष्मविषयेऽपि तस्या द्वैविध्यमतिदिशति।

* एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥ ४४ ॥ *

तत्र भूतसूक्ष्मेषु अभिव्यक्तधर्मकेषु देशकालनिमित्तानुभवावच्छिन्नेषु या समापत्तिः सा सविचारेत्युच्यते। तत्राप्येकबुद्धिनिर्ग्राह्यमेवोदितधर्मविशिष्टं भूतसूक्ष्ममालम्बनीभूतं समाधिप्रज्ञायामुपतिष्ठते। या पुनः सर्वथा सर्वतः शान्तोदिताव्यपदेश्यधर्मानवच्छिन्नेषु सर्वधर्मानुपातिषु सर्वधर्मात्मकेषु समापत्तिः सा निर्वि-

चारेत्युच्यते, एवं स्वरूपं हि तद् भूतसूक्ष्ममेतेनैव स्वरूपेणालम्बनीभूतमेव समाधिप्रज्ञास्वरूपमुपरञ्जयति, प्रज्ञा च स्वरूपशून्येवार्थमात्रा यदा भवति तदा निर्विचारेत्युच्यते, तत्र महद्वस्तुविषया सवितर्का निर्वितर्का च, सूक्ष्मविषया सविचारा निर्विचारा च, एवमुभयोरेतयैव निर्वितर्कया विकल्पहानिर्व्याख्याता इति ॥ ४४ ॥

एतया सवितर्कनिर्वितर्करूपया स्थूलविषयकसमापत्त्या सूक्ष्मविषयाऽपि सविचारनिर्विचाररूपा समापत्तिद्वयी व्याख्याता अर्थोपरागानुपरागसाम्येनेत्यर्थः। वितर्कविचारेत्यादिसूत्रे सूक्ष्मविषयकाभोगो विचार इत्युक्तं स एवात्र सविचारनिर्विचाररूपेण द्विधा उच्यते इति स्मर्त्तव्यम्। कार्य्याद्युपरागानुपरागयुक्तां समापत्तिं द्विधा विभजते। तत्र भूतसूक्ष्मेष्विति। अत्र भूतशब्द इन्द्रियाणामप्युपलक्षकः सामान्यत एव सूक्ष्मविषयत्वेनास्याः समापत्तेः भाष्ये व्याख्येयत्वात्। भूतेन्द्रियाणां यत् सूक्ष्मं कारणं तन्मात्रादिप्रकृतिपर्य्यन्तं 'सूक्ष्मविषयत्वं चालिङ्गपर्य्यवसान' मित्यागामिसूत्रात् तेषु वर्त्तमानधर्मविशिष्टेषु तथा देशकालनिमित्तैर्विशिष्टतया अनुभूयमानेषु या समापत्तिः सा सविचारेत्युच्यत इत्यर्थः। अत्र देश उपर्य्यधःपार्श्वादिः कालो वर्त्तमानादिः निमित्तं परिणामप्रयोजकः पुरुषार्थविशेष इति पूर्ववदेवात्राप्यवयवातिरिक्तस्तन्मात्रादिरूपोऽवयवी समापत्तेर्विषय इत्याह। अत्रापीति। उदितो वर्त्तमानः, उपतिष्ठते आरूढं भवति। सविचारां व्याख्याय निर्वि-

चारां व्याचष्टे। या पुनरिति। या तु सर्वथा सर्वैः स्वरूपैः सर्वतो देशकालाद्यनवच्छेदतः समापत्तिः शान्तोदिताव्यपदेश्य-धर्मानवच्छिन्नेषु अतीतवर्त्तमानभविष्यद्धर्मैरनवच्छिन्नेषु अतीतवर्त्तमानभूतसूक्ष्मेषु जायते सा निर्विचारा अनवच्छिन्नशब्द-स्यासम्बद्धार्थत्वनिरासाय विशेषणद्वयं सर्वधर्मेत्यादि। सर्वधर्माणामाश्रयेषु सर्वधर्माणामाश्रयेषु चेत्यर्थः। निर्वितर्कसाम्य-मस्याः प्रतिपादयति। एवं स्वरूपं ह्येति। पूर्वसूत्रानुसारेणैतद्व्याख्येयम्। उक्तस्य समापत्तिचतुष्टयस्य विषयविभागमाह। तत्रेति। महत् स्थूलं केवलविकृतिरिति यावत्। तेनेन्द्रियाणां भूतपरमाणूनाञ्च संग्रहः। भूतपरमाणूनाञ्च सूक्ष्ममध्ये प्रवेशो वक्तुं न शक्यते, आगामिसूत्रे पार्थिवस्याणोर्गन्धतन्मात्रं सूक्ष्म इत्यादिना तन्मात्रादीनामिव सूक्ष्मत्वस्य वक्ष्यमाणत्वात्। सूक्ष्मत्वञ्च तत्त्वान्तरकारणत्वं तच्च जलादिचतुष्टयव्यावृत्त्यर्थं वहिरिन्द्रियग्राह्यगुणराहित्येन विशेषणीयम्। वस्तुतस्तु अष्टप्रकृतिसिद्धान्ताद्भूतान्युत्तरभूतेष्वाधारकारणान्येव न तु प्रकृतयः, अतोऽत्र तत्त्वान्तरप्रकृतित्वमेव सूक्ष्मत्वमिति। ननु शब्दार्थज्ञानविकल्प-सङ्कीर्णत्वमिव कथमेतयैवेत्यनेन नातिदिश्यते तत्राह। एवमुभयोरेतयैव निर्वितर्कया विकल्पहानिर्व्याख्यातेति। एवं स्वरूप-मिव विकल्पहानिरपि यथोक्तविकल्पराहित्यमपि उभयोः सविचारनिर्विचारयोरेतयैव पूर्वोक्तया निर्वितर्कया यथोक्तविकल्प-शून्यया सूत्रकारेण व्याख्यातप्रायेत्यर्थः। पूर्वभूमिकायां त्यक्त-विकल्पस्योत्तरभूमिकायामसम्भवादिति। सूक्ष्मविषयेत्युक्तं, तत्र सूक्ष्मो विषयः किम्पर्य्यन्त इत्याकाङ्क्षायामाह ॥४५॥

*** सूक्ष्मविषयत्वं चालिङ्गपर्य्यवसानम् ॥४५॥ ***

**पार्थिवस्य अणोः गन्धतन्मात्रं सूक्ष्मो विषयः,**

आप्यस्य रसतन्मात्रं, तैजसस्य रूपतन्मात्रं, वायवीयस्य स्पर्शतन्मात्रं, आकाशस्य शब्दतन्मात्रमिति, तेषामहङ्कारः, अस्यापि लिङ्गमात्रं सूक्ष्मो विषयः, लिङ्गमात्रस्याप्यलिङ्गं सूक्ष्मो विषयः, न चालिङ्गात्परं सूक्ष्ममस्ति, नन्वस्ति पुरुषः सूक्ष्म इति, सत्यं, यथा लिङ्गात् परमलिङ्गस्य सौक्ष्म्यं न चैवं पुरुषस्य, किन्तु, लिङ्गस्य अन्वयिकारणं पुरुषो न भवति हेतुस्तु भवतीति अतः प्रधाने सौक्ष्म्यं निरतिशयं व्याख्यातम् ॥ ४५ ॥

सूक्ष्मश्चासौ विषयश्चेति सूक्ष्मविषयः, अलिङ्गं प्रकृतिस्तत्पर्य्यन्तैव सूक्ष्मविषयतेत्यर्थः। तत्र स्थूलमारभ्य प्रकृतिपर्य्यन्तस्य सूक्ष्मतायां क्रममाह। पार्थिवस्येति। स्थूलकाष्ठाः पञ्चविधा अणवस्तत्र पार्थिवाण्वपेक्षया गन्धतन्मात्रं समापत्तेः सूक्ष्मो विषयः। यद्यपि पार्थिवाणुर्जलविशिष्टगन्धतन्मात्रारब्धस्तथापि गन्धतन्मात्रस्य प्राधान्यात् तदेव पार्थिवाणोः सूक्ष्ममुक्तम्। एवमाप्यादीनां त्रयाणां पूर्वपूर्वभूतविशिष्टरसादितन्मात्रकार्य्यत्वेऽपि आकाशाणोश्चाहङ्कारविशिष्टशब्दतन्मात्रकार्य्यत्वेऽपि प्राधान्यादेकैकतन्मात्रमेव सूक्ष्ममित्युक्तमिति वेदितव्यम्। तेषामहङ्कार इति। तेषां पञ्चतन्मात्राणामहङ्कारः सूक्ष्मः कारणत्वात्। अत्र च तन्मात्रैरिन्द्रियाण्युपलक्षणीयानि। अस्यापीति। अहङ्कारस्यापीत्यर्थः। लिङ्गमात्रं महत्तत्त्वं तद्धि स्वकारणस्य प्रकृतेरनुमापकमात्रमङ्कुरवत्। प्रकृतिगतविशेषाणामहङ्कारादिष्वेव प्रकटीभावात्। यथा अन्यत्र काण्डादिभिर्बीजगतविशेषाभि-

व्यक्तिर्नाङ्कुरमात्रेणेति। अलिङ्गं प्रधानम्। अकार्य्यत्वेन कस्याप्यननुमापकत्वादिति। अलिङ्गपर्य्यवसानत्वं व्याचष्टे। न च अलिङ्गादिति। चोदयति। नन्विति। ननु पुरुषः प्रकृत्यपेक्षयापि सूक्ष्मोऽस्ति निर्धर्मकत्वादिति पूर्वपक्षं परिहरति। सत्यमिति। यथोपादानतया लिङ्गापेक्षितं सौक्ष्म्यं प्रधानस्यास्ति नैवं पुरुषस्य तस्यापरिणामित्वात् उपादानतया च सूक्ष्मत्वमत्र विवक्षितमित्याशयः। ननु यदि पुरुषः कारणं न भवति तर्हि 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्ब्रह्म' 'तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी'त्यादि श्रुतिस्मृतिशतविरोध इत्याशङ्कां परिहरति। किन्तु लिङ्गस्येति। हेतुस्तु भवति किन्तु लिङ्गस्यान्वयिकारणमुपादानकारणं पुरुषो न भवतीति व्युत्क्रमेणान्वयः। तत्र परमात्मनोऽधिष्ठातृत्वेन निमित्तकारणत्वं 'मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्' इति गीतावचनात्।

प्रधानपुंसोरजयोर्यतः क्षोभः प्रवर्त्तते।
नित्ययोर्व्यापिनोश्चैव जगदादौ महात्मनोः॥
तत्क्षोभकत्वात् ब्रह्माण्डसृष्टौ हेतुर्निरञ्जनः।
अहेतुरिति सर्वात्मा जायते परमेश्वरः॥

इत्यादि सकलस्मृतिषु तथा निर्णयाच्च। यत्तु ईश्वरस्याधिष्ठानत्वरूपमुपादानत्वं यतो वा इमानि भूतानि जायन्त इत्याद्युक्तश्रुतिस्मृत्योर्गीयते। आकाशस्य वायूपादानत्ववत्, तदप्यत्र दर्शने निमित्तकारणतामध्य एव प्रवेश्यते पुरुषाणां विकारित्वभ्रमनिरासायेति पुरुषार्थं प्रकृतेः प्रवृत्त्यभ्युपगमेन च जीवपुरुषाणामपि महदाद्यखिलसृष्टिहेतुत्वं संयोगमात्रेण नोपादानत्वेन। तथा चोक्तम्।

बुद्ध्यादयो विशेषान्ता अव्यक्तादीश्वरेच्छया ।
पुरुषाधिष्ठितादेव जज्ञिरे मुनिपुङ्गवाः ॥
सत्त्वं रजस्तम इति प्रकृतेरभवन् गुणाः ।
मया प्रक्षोभ्यमाणायाः पुरुषानुमतेन च ॥

इत्यादिस्मृतिभिः । जीवानामधिष्ठानसंयोगमात्रम् अनुमतिस्तु पूर्वकल्पीयकामकर्मादिरूपेति दिक् । तदेवं ग्राह्यग्रहणसमापत्त्योः सूक्ष्मविषयभेदेन विशिष्टाविशिष्टरूपतश्चतुर्विधविभाग उक्तः ग्रहीतृसमापत्तौ च यः सविकल्परूपो विशेषः स एतास्वेव चतसृषु अन्तर्भूतः चेतनोपरागेणैव अचेतनेषु योगस्य व्यवस्थापितत्वात् । अतो ग्रहीतृसमापत्तौ सविकल्पाविकल्पादिविभागो नोक्तः । वितर्केत्यादिसूत्रेण पूर्वं सम्प्रज्ञातस्य अवान्तरविभाग एव कृत इदानीं यथोक्तसमापत्त्याख्यकार्य्यमुखेन सबीजपरिभाषापूर्वकं सम्प्रज्ञातस्य सामान्यलक्षणमनेनैव प्रसङ्गेनाह ॥ ४५ ॥

## * ता एव सबीजः समाधिः ॥ ४६ ॥ *

**ताश्चतस्रः समापत्तयो बहिर्वस्तुबीजा इति समाधिरपि सबीजः, तत्र स्थूलेऽर्थे सवितर्को निर्वितर्कः, सूक्ष्मेऽर्थे सविचारो निर्विचार इति चतुर्द्धोपसङ्ख्यातः समाधिरिति ॥ ४६ ॥**

ता एव ग्रहीतृग्रहणग्राह्येषु समापत्तय एव सबीजः समाधिः सम्प्रज्ञातयोग इत्यर्थः । समापत्तिरूपसाक्षात्कारहेतुत्वाद्योगस्य समापत्तित्वमुक्तम् । योगे स्वतोऽवान्तरविशेषाभावादिति । ननु ग्रहीतृ-ग्रहणग्राह्य-समापत्तिभिर्वितर्कविचारास्मितानुगतास्त्रयः सम्प्रज्ञाता एव संगृह्यन्ते न पुनरानन्दानुगत इति कथं ता एवे-

त्यवधारणमिति चेन्न। आनन्दस्य बुद्धिधर्मत्वेन ग्राह्यमध्ये प्रवेशात्। ननु दुःखवीजसंस्कारहेतुतया समापत्तय एव सवीजाः न तु वृत्तिनिरोधात्मको योग इति कथमुच्यते ता एव सवीजयोग इति तत्राह भाष्यकारः। ताश्चतस्र इति। वहिर्वस्तूनि अनात्मधर्माः संस्कारधर्मादयो दुःखवीजानि जायन्ते आभ्य इति वहिर्वस्तुवीजाः, सम्प्रज्ञातनिष्ठाया अपि संस्कारहेतुत्वात् धर्ममेघत्वाच्च। तथा च वितर्कादिसूत्रोक्तरीत्या चतस्रः प्रकृते तु त्रिधा विभक्तास्ता ग्रहीत्रादिविषयिकाः समापत्तयो वहिर्वस्तुवीजा इत्यतस्ताभिः सम्बन्धात्समाधिः सम्प्रज्ञाताख्यो वृत्तिनिरोधोऽपि सवीज उच्यत इत्यर्थः। ननु स्थूलसूक्ष्मसमापत्तेरेव चतुर्विधत्वादानन्दास्मितासमापत्तिभ्यां सह षट् समापत्तयो भवन्ति तत्कथमुच्यते चतस्र इत्याशङ्कामपाकरोति। तत्र स्थूल इति। तत्र चतसृषु समापत्तिषु मध्ये स्थूलार्थ एक एव समाधिरवान्तरभेदेनैव सवितर्कनिर्वितर्करूपतो द्विधा। तथा सूक्ष्मेऽर्थेऽप्येक एव समाधिरवान्तरभेदेनैव सविचारनिर्विचाररूपतो द्विधा प्रोक्त इत्यतो वितर्कानुगतादिरूपैः पूर्वं स सम्प्रज्ञातयोगश्चतुर्द्धा उपसंख्यातः परिगणित इत्यर्थः। केचित्तु सूत्रस्थ एवकारो भिन्नक्रमः। तथा च ताः सवितर्कनिर्वितर्कसविचारनिर्विचाररूपाश्चतस्रः समापत्तयः सवीजसमाधिरेवेति सूत्रार्थः, तेन न ग्रहीत्रादिसमापत्तेरपि सवीजत्वं भाष्ये प्रागुक्तं विरुध्यत इत्याहुः। तन्न। ग्रहीत्रादिसमापत्तेः सवीजत्वानुक्त्या अत्र सूत्रकारस्य न्यूनतापत्तेः एवकारवैयर्थ्याच्च। यथाक्रमस्यैव एवकारस्योपपत्तौ भिन्नक्रमत्वानौचित्याच्चेति। यच्चान्यत् तैरुक्तं ग्राह्यविषये स्थूलसूक्ष्मभेदेन सवितर्कादिरूपाश्चतस्रः समापत्तयः ग्रहणाख्येषु च इन्द्रियेषु सानन्दनिरानन्दरूपे द्वे समापत्ती ग्रहीतृषु च सास्मितनिरस्मितरूपे द्वे समापत्ती इत्यष्टौ समा-

पत्तयो बोध्याः युक्तिसाम्यादिति तदपि न। प्रमाणादर्शनात्। आनन्दानुगतास्मितानुगतयोर्निरानन्दनिरस्मितत्वरूपविशेषासम्भवाच्च। आनन्दो हि ह्लादमात्रोऽस्मिता च चैतन्यमात्रसंविदिति भाष्यकृता प्रोक्तम्। न तु इन्द्रियं ह्लादशब्देन व्याख्येयं, लक्षणाप्रसङ्गात्। नापि अहङ्कारोपरक्तचैतन्यमस्मिताशब्देन व्याख्येयं लक्षणापत्तेः। अतः कथं ह्लादवतः सम्प्रज्ञातस्य ह्लादशून्यत्वं कथ वा विविक्तचिन्मात्रसंविद्युक्तस्य सम्प्रज्ञातस्य तच्छून्यत्वमिति दिक्। तस्मादवान्तरभेदेन पञ्चैव समापत्तयः, ग्राह्यग्रहणयोः स्थूलसूक्ष्मभेदेन सवितर्काद्याश्चतस्रः पञ्चमी च ग्रहीतृष्विति सम्प्रज्ञातयोगस्तु आनन्दानुगतमादायावान्तरभेदेन षोढैवेति। उक्तासु समापत्तिषु निर्विचारायां विशेषं कञ्चिदाह ॥ ४६ ॥

* निर्विचारवैशारद्येऽध्यात्मप्रसादः ॥ ४७ ॥ *

अशुद्ध्यावरणमलापेतस्य प्रकाशात्मनो बुद्धिसत्त्वस्य रजस्तमोभ्यामनभिभूतः स्वच्छः स्थितिप्रवाहो वैशारद्यं, यदा निर्विचारस्य समाधेर्वैशारद्यमिदं जायते तदा योगिनो भवति अध्यात्मप्रसादः भूतार्थविषयः क्रमाननुरोधी स्फुटप्रज्ञालोकः, तथा चोक्तं, "प्रज्ञाप्रसादमारुह्योऽशोच्यः शोचतो जनान्। भूमिष्ठानिव शैलस्थः सर्वान् प्राज्ञोऽनुपश्यति" ॥ ४७ ॥

समान्यतो वैशारद्यमादौ व्याचष्टे। अशुद्ध्येति। रजस्तमो-

वृद्धिकारणं पापादिरशुद्धिः सैवावरणलक्षणो मलस्तस्मादपेत-स्येति हेतुगर्भविशेषणम् । प्रकाशात्मनः प्रकाशस्वभावस्य बुद्धि-रूपसत्त्वस्य कारणापायादेव रजस्तमोभ्यामनभिभूतोऽतः स्वच्छः ध्येयगताशेषविशेषप्रतिविम्बोद्ग्राही स्थितिप्रवाह एकाग्रता-धारा चित्तस्य वैशारद्यमित्यर्थः । समग्रसूत्रार्थं व्याचष्टे । यदेति । आत्मनि बुद्धौ वर्त्तते इत्यध्यात्मं तादृशः । प्रसादशब्दार्थं विवृ-णोति । भूतार्थेति । यथार्थविषयकः क्रमाननुरोधी युगपत्सर्वा-र्थताग्राही स्फुटः प्रत्यक्षः स प्रज्ञाख्य आलोक इत्यर्थः । अत्रैव परमर्षिगाथामुदाहरति । तथा चेति । तरति शोकमात्मवि-दिति श्रुतेः । अशोच्यः अहं दुःखी पापीत्यादिरूपैः स्वस्याशोच्यः सन् सर्वानेव जनान् शोचतो दुःखितान् पश्यति । स्वयं शोच्यो हि पुरुषः स्वापेक्षया कञ्चित् सुखिनमिव पश्यति मौढ्यात् । अशोच्यस्तु परमार्थतो दुःखसमुद्रमग्नं सर्वं जीवजातं दुःखित-मेव पश्यति अमूढत्वादित्यर्थः । लोकानन्तरमितिशब्दः पूर-णीयः तथा च निर्विचारवैशारद्ये जाते स्वयमेव प्रकृतिपुरुष-विवेको वा परमेश्वरतत्त्वं वा साक्षात् क्रियते न तु तत्साक्षा-त्काराय पुनर्योगापेक्षेति निर्विचाराय उत्कर्षः । पूर्वसूत्रोक्त-सवीजसमाधौ जायमानायाः समापत्त्याख्यायाः प्रज्ञाया अन्वर्थां तान्त्रिकीं संज्ञामपि दर्शयति ॥ ४७ ॥

* ऋतम्भरा तत्र प्रज्ञा ॥ ४८ ॥ *

तस्मिन् समाहितचित्तस्य या प्रज्ञा जायते तस्या ऋतम्भरेति संज्ञा भवति, अन्वर्था च सा, सत्यमेव विभर्त्ति न तत्र विपर्य्यासगन्धोऽपि अ-स्तीति, तथा चोक्तम् "आगमेनानुमानेन ध्या-

नाभ्यासरसेन च। त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्” इति ॥ ४८ ॥

सा पुनः,—

तस्मिन्निति। तत्रेत्यस्य विवरणं तस्मिन् समाहितचित्तस्येति पूर्वोक्ते सबीजयोग इत्यर्थः। न चाव्यवहितसूत्रोक्तं वैशारद्यं प्रसादो वा कथं तत्रेत्यनेन न परामृष्यत इति वाच्यम्। द्वितीयसूत्रतोऽत्र समाधिप्रज्ञासामान्यपरत्वस्य लभ्यमानत्वात्। सुगममन्यत्। ननु संज्ञाकथनमात्रेण किं प्रयोजनमित्याशङ्क्याह। अन्वर्थेति। विपर्य्यासरूपज्ञानं यद्यपि सवितर्कयोगजप्रज्ञायां शब्दार्थज्ञानविकल्पेऽस्ति तथापि ऋतम्भरजातीयत्वस्यैवात्र विवक्षितत्वात् न तस्यामव्याप्तिः, साजात्यं च समाधिजप्रज्ञात्वेन। अथवा तत्र समाहितचित्ते जायमाना या प्रज्ञा सैव ऋतम्भरोच्यत इति सूत्रार्थः। लौकिकज्ञानेऽविद्यालेशसम्पर्कावश्यम्भावादिति योगकाले प्रकृष्टा प्रज्ञा भवतीत्यत्र स्मृतिं प्रमाणयति। तथा चेति। ध्यानस्य चिन्तनस्य योऽभ्यासः पौनःपुन्यं तत्र यो रस आदरस्तेन, तथा च श्रवणमनननिदिध्यासनैस्त्रिभिर्हेतुभिः सबीजयोगकाले प्रज्ञां प्रकल्पयन् प्रकर्षेण विपर्य्यासराहित्येनोत्पादयन् तत्प्रज्ञातः परवैराग्यद्वारा वक्ष्यमाणमुत्तमयोगं निर्वीजं लभत इति श्लोकार्थः। ननु आगमानुमानयोरपि प्रमाणत्वात्ताभ्यामेव तदर्थतत्त्वं गृह्यतां किं योगेनेत्याशङ्कानिरासायोत्तरं सूत्रं प्रवर्त्तते तद्योजयति। सा पुनरिति ॥४८॥

* श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ॥ ४९ ॥ *

श्रुतम् आगमविज्ञानं, तत्सामान्यविषयं,

न ह्यागमेन शक्यो विशेषोऽभिधातुं, कस्मात् न हि विशेषेण कृतसङ्केतः शब्द इति । तथानुमानं सामान्यविषयमेव, यत्र प्राप्तिस्तत्र गतिर्यत्राप्राप्तिस्तत्र न भवति गतिरित्युक्तम्, अनुमानेन च सामान्येन उपसंहारः, तस्माच्छ्रुतानुमानविषयो न विशेषः कश्चिदस्तीति, न चास्य सूक्ष्मव्यवहितविप्रकृष्टस्य वस्तुनः लोकप्रत्यक्षेण ग्रहणं, न च अस्य विशेषस्य अप्रामाणिकस्याभावोऽस्तीति समाधिप्रज्ञानिर्ग्राह्य एव स विशेषो भवति भूतसूक्ष्मगतो वा पुरुषगतो वा । तस्माच्छ्रुतानुमानप्रज्ञाभ्यामन्यविषया सा प्रज्ञा विशेषार्थत्वाद् इति ॥ ४९ ॥

समाधिप्रज्ञाप्रतिलम्भे योगिनः प्रज्ञाकृतः संस्कारो नवो नवो जायते ।

सा तु समाधिसामान्यजा प्रज्ञा श्रुतानुमानरूपप्रज्ञाभ्यां श्रवणमननाभ्यामन्यविषया अतिरिक्तविषया विशेषार्थत्वात् विशेषोऽर्थो विषयो यस्याः सा तथा तत्त्वादित्यर्थः । समाधिप्रज्ञायाः श्रवणमननाभ्यामतिरिक्तविषयत्वं विवृणोति । श्रुतमागमेति । न हि विशेषेणेति । पदार्थतावच्छेदकरूपेणैव पदार्थः शाब्दबोधे भासतेऽन्यथातिप्रसङ्गात् । पदार्थतावच्छेदकन्तु घटत्वादिसामान्यमेव न तु तत्तद्विशेषास्तेषामानन्त्येन सर्वेषामेकदानुपस्थितेस्तत्तद्रूपैः शक्तिग्रहासम्भवात् विशेषाणामन्योन्यं

व्यभिचाराच्च सामान्यतः श्रुतेऽपि अर्थे विशेषसंशयदर्शनाच्चेति। इत्युक्तमिति। अनुमानमित्यस्य विशेषणम्। अत्र हि व्यापकतावच्छेदकेन गतित्वादिसामान्येनैव अनुमानं भवति न तु क्रियादिगतविशेषरूपैरिति। अनुमानेन चेति सामान्योपसंहार इत्युक्त इत्यनुषङ्गः। ननु श्रुतानुमानागोचरोऽपि विशेषो लौकिकप्रत्यक्षेणैव ग्राह्योऽस्तु किं योगजप्रत्यक्षेणेति तत्राह। न च अस्येति। ननु एवं तस्य विशेषस्य अप्रामाणिकत्वात् अभाव एवास्तु इत्याशङ्कां प्रतिषेधति। न च अस्य विशेषस्येति। न हि निर्विशेषं सामान्यमस्तीतिन्यायेन सर्वत्रैव वस्तुनि विशेषसिद्धेरिति भावः। अतः परिशेषात् समाधिप्रज्ञाग्राह्य एव स विशेष इत्युपसंहरति। इति समाधीति। स्थूलस्य विशेषः कदाचित् लौकिकप्रत्यक्षगोचरोऽपि स्यादिति स्थूलं परित्यज्य भूतसूक्ष्मगत इत्युक्तम्। पुरुषगतो वेति। एतेन पुरुषेष्वपि विशेषादिधर्मः स्वीकृतः धर्मनिषेधस्तु विशेषगुणद्रव्यत्वादिपरः। अथ वा स्वस्वोपाधिप्रतिबिम्बा एव अतीतानागतवर्त्तमाना मुक्तामुक्तसाधारणाखिलपुरुषेषु अन्योन्यं विशेष इति बोध्यम्। स्यादेतत्। व्यवहितादिषु सन्निकर्षाद्यभावात्कथं समाधिप्रत्यक्षग्राह्यत्वमपि स्यात्। अथ योगजधर्मस्यापि सन्निकर्षत्वं कल्प्यमिति चेन्न। संयोगादिभिरननुगमात् प्रत्यक्षे विषयस्य कारणत्वेन अतीतादिप्रत्यक्षस्यैव असम्भवाच्चेति। अत्रोच्यते। अस्माकमन्तःकरणस्य विभुत्वेन अतीतादीनां स्वरूपतः सत्त्वेन च सदा सर्वार्थसन्निकर्षात्, योगजधर्मेण च व्यवहितातीतादिज्ञानप्रतिबन्धकं तम एव निरस्यत इति तदेतत्साङ्ख्यभाष्ये 'लीनवस्तुलब्धातिशयसम्बन्धाद्वा न दोष' इति सूत्रेऽस्माभिः प्रपञ्चितम्। उपसंहारमुखेन सूत्रवाक्यार्थमाह। तस्माच्छ्रुतेति। एतेन दशमस्त्वमसीतिवत् शब्दादेव साक्षात्कार आत्मनो भवति निर्विशेषत्वेन चात्मनो

न विशेषग्रहार्थमपि योगजप्रत्यक्षापेक्षेति नवीनवेदान्तिप्रलापो ऽपसिद्धान्त एव, स्वशास्त्रानुक्तेऽर्थे समानतन्त्रसिद्धान्तस्यैव सिद्धान्तत्वादिति । यथोक्तप्रज्ञायाः संस्कारजनकत्वमुत्तरसूत्रोपयोगितया प्रतिपादयति । समाधीति । ननु तथापि प्रज्ञोत्पत्तिपर्य्यन्तं योगापेक्षा अस्तु प्रज्ञोत्पत्त्यनन्तरं तु पुनः सम्प्रज्ञातपरम्परायाः किं फलमित्याशङ्कायामाह ॥ ४९ ॥

* तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ॥५०॥ *

समाधिप्रज्ञाप्रभवः संस्कारो व्युत्थानसंस्काराशयं बाधते, व्युत्थानसंस्काराभिभवात् तत्प्रभवा प्रत्यया न भवन्ति, प्रत्ययनिरोधे समाधिरुपतिष्ठते, ततः समाधिजा प्रज्ञा, ततः प्रज्ञाकृताः संस्कारा, इति नवो नवः संस्काराशयो जायते, ततः प्रज्ञा ततश्च संस्कारा इति । कथमसौ संस्कारातिशयश्चित्तं साधिकारं न करिष्यति इति, न ते प्रज्ञाकृताः संस्काराः क्लेशक्षयहेतुत्वाच्चित्तमधिकारविशिष्टं कुर्वन्ति, चित्तं हि ते स्वकार्य्यादवसादयन्ति, ख्यातिपर्य्यवसानं हि चित्तचेष्टितमिति ॥ ५० ॥

किञ्चास्य भवति ।

प्रतिबन्धः कार्य्यविरोधित्वम् । इदमेव बाधशब्देन भाष्यकारो वक्ष्यति । सर्वेषाञ्च संस्काराणां चित्तनाशादेव नाश इत्यपि भाष्ये व्यक्तीभविष्यति । सूत्रार्थं व्याचष्टे, बाधत इत्यन्तेन ।

आश्रेते इत्याशयः संस्कारश्चासावाशयश्चेति विग्रहात् संस्काराशयमनुद्बुद्धसंस्कारमित्यर्थः। उद्बुद्धसंस्कारस्य च बाधो न सम्भवति उद्बोधप्रतिबन्धस्यैव बाधशब्दार्थत्वादिति भावः। ननु वृत्तिनिरोधसंस्कारस्य व्युत्थानसंस्काराभिभावकत्वं वक्ष्यति तत् कथं समाधिप्रज्ञासंस्कारस्यापि व्युत्थानसंस्काराभिभावकत्वमिष्यत इति चेन्न। वृत्तित्वावच्छिन्नाभावस्यैव वक्ष्यमाणयुक्त्या संस्कारजनकत्वसिद्धेर्न तु सम्प्रज्ञातकालीनस्य यत्किञ्चिद्वृत्ति निरोधस्यापि, स्मृतिहेतुतया सिद्धात् प्रज्ञासंस्कारादेव व्युत्थानसंस्काराभिवस्य वक्ष्यमाणप्रयोजनस्योपपत्तेः। ननु एकयैव प्रज्ञाव्यक्त्या तत्सन्तानव्यक्त्या चोत्पादितेन संस्कारेण व्युत्थानसंस्कारबाधसम्भवे किमर्थं पुनः पुनः सम्प्रज्ञातानुष्ठानं तत्राह। व्युत्थानसंस्काराभिभवादित्यादि ततश्च संस्कारा इत्यन्तेन। अभिभवात्। तत्करणात्। शेषं स्पष्टम्। अयं भावः। नैकदा सम्प्रज्ञातात् व्युत्थानसंस्कारबाधः। श्रुतिस्मृतिसिद्धस्य पुनः पुनर्व्युत्थानस्यानुपपत्तेः। उपदेशाद्यनुपपत्तेश्च। किन्तु सम्प्रज्ञातपरम्पराजन्येन दृढतरसंस्कारेणैव तद्बाधः अदृढैश्च प्राथमिकैः सम्प्रज्ञातसंस्कारैस्तस्य बाधार्थं तनुता परम्परैव क्रियते तथा च संस्कारदार्ढ्यार्थं प्रज्ञासंस्कारचक्रमपेक्ष्यत इति। एतेन प्रज्ञायाः साक्षादेव व्युत्थानसंस्कारबाधकत्वशङ्काप्यपास्ता। एकप्रज्ञयैव संस्कारबाधे व्युत्थानासम्भवात्। प्रज्ञासंस्कारे तु दृढत्वरूपवैजात्यसम्भवेन तस्यैव व्युत्थानसंस्कारबाधकतावच्छेदकत्वकल्पनया व्युत्थानाद्युपपत्तिरिति। व्युत्थानसंस्कारेषु मध्ये च अविद्यासंस्कारस्यायं विशेषः यत् सकृत् प्रज्ञया जनितेनैव संस्कारेण अविद्यासंस्कारो बाध्यते न तत्र प्रज्ञासंस्कारचक्रापेक्षेति। एतच्च 'ते प्रतिप्रसवहेयाः सूक्ष्मा' इत्यागामिसूत्रद्वये प्रकटीभविष्यति। इदमत्रावधेयम्। अस्मिन् सूत्रे शेषसूत्रे च अखिलसंस्कारदा-

हस्य योगफलत्ववचनात् प्रारब्धकर्मणोऽपि अतिक्रमेणाशुतर-मोक्षः केवलज्ञानासाध्यो योगयोरसाधारणं फलमिति। न हि भोगसंस्कारस्य निःशेषतो दाहे प्रारब्धकर्मापि फलायालं, दृष्ट-कारणाभावात्। योगाग्निदग्धकर्मचयोऽचिरादित्यादिवाक्ये सङ्कोचकप्रमाणाभावाच्च। ज्ञानाग्निः सर्वकर्माणीत्यादिषु अगत्या सङ्कोचः क्रियते तस्य तावदेव चिरमित्यादिज्ञानिविषयकश्रुतेः उपदेशाद्यन्यथानुपपत्तेश्च। सांख्यवेदान्तसूत्रयोश्च ज्ञानिनामेव प्रारब्धभोगावश्यकतोक्ता। ननु अर्द्धभुक्तप्रारब्धकर्मणां नाशे तत्फलस्य कालप्रतिनियमानुपपत्तिरिति चेन्न। शास्त्रोक्तनाशका-नाश्यकर्मस्वेव कालप्रतिनियमात्। अन्यथा कर्मविपाकोक्तप्राय-श्चित्तस्य शान्तिकर्मादेश्चार्द्धभुक्तपापनाशकत्वानुपपत्तिः शास्त्रोक्त-नाशकानाश्यकर्मणां तु स्वावस्थितिपर्य्यन्तमेव फलदातृत्वमिति दिक्। नन्वेवं प्रज्ञासंस्कारातिशयस्वीकारे ततोऽपि पुनर्जन्म भविष्यति। न च असम्प्रज्ञातयोगेन तस्य नाशो भवितेति वाच्यम्। असम्प्रज्ञाताभावेऽपि प्रारब्धसमाप्त्यनन्तरं केवलज्ञानतो मोक्षाभ्युपगमादित्याशङ्कते। कथमसाविति। साधिकारं स्व-कार्य्यजननक्षमम्। परिहरति। न त इति। ते प्रज्ञासंस्कारा-श्चित्तं स्वकार्य्यक्षमं न कुर्वन्ति जन्मकारणस्य अविद्यादिक्लेशस्य विनाशनादित्यर्थः। कर्मनाशनादित्यपि बोध्यम्। कर्त्तव्यस-मापनादपि साधिकारं न कुर्वन्तीत्याह। चित्तं हीति। स्वका-र्य्यादवसादयन्ति कर्त्तव्यशून्यं कुर्वन्ति तत्र हेतुः ख्यातीत्यादि। हि यस्माच्चित्तस्य व्यापारो विवेकख्यातिपर्य्यन्तः विवेकख्याति-निष्पत्तौ सत्यां प्रवर्त्तकपुरुषार्थासम्भवात् सा च विवेकख्याति-रूपा प्रज्ञा तत्संस्कारातिशयेनानिशमुत्पद्य परवैराग्यजननद्वा-रेण समाप्यत इत्यर्थः। क्षीणवृत्तेरित्यादिसूत्रैः सम्प्रज्ञातस्य फलादिकमुक्तमिदानीमसम्प्रज्ञातस्य फलादेः सूत्रं प्रवर्त्तयति।

तत् सूत्रं प्रज्ञासंस्कारातिशयस्य पुनर्जन्माहेतुत्वे हेत्वन्तरपरतया अवतारयति। किञ्च अस्येति। अस्य प्रज्ञासंस्कारस्यान्यच्च फलं सर्ववृत्तितत्संस्कारयोर्निरोधो भवतीति न पुनर्जन्मसम्भावनेत्यर्थः ॥ ५० ॥

* तस्यापि निरोधे सर्वनिरोधान्निर्वीजः समाधिः ॥ ५१ ॥ *

स न केवलं समाधिप्रज्ञाविरोधी प्रज्ञाकृतानां संस्काराणामपि प्रतिबन्धी भवति, कस्मात्, निरोधजः संस्कारः समाधिजान् संस्कारान् बाधत इति। निरोधस्थितिकालक्रमानुभवेन निरोधश्चित्तकृतसंस्कारास्तित्वमनुमेयम्।

व्युत्थाननिरोधसमाधिप्रभवैः सह कैवल्यभागीयैः संस्कारैश्चित्तं स्वस्यां प्रकृतौ अवस्थितायां प्रविलीयते, तस्मात्ते संस्काराः चित्तस्याधिकारविरोधिनो न स्थितिहेतवो भवन्तीति, यस्मादवसिताधिकारं सह कैवल्यभागीयैः संस्कारैश्चित्तं विनिवर्त्तते तस्मिन्निवृत्ते पुरुषः स्वरूपप्रतिष्ठोऽतः शुद्धमुक्त इत्युच्यते ॥ ५१ ॥

इति पातञ्जले साङ्ख्यप्रवचने योगशास्त्रे

समाधिपादः प्रथमः।

---

पूर्वपूर्वासम्प्रज्ञाते तावत् प्रज्ञैव निरुध्यते प्रज्ञासंस्कारस्य तु तानवमात्रं भवति। एवं क्रमेण तु तस्यापि प्रज्ञाकृतसंस्कारस्यापि असम्प्रज्ञातपरम्परया निरोधेऽत्यन्ताभिभवे जायमाने चरमासम्प्रज्ञातो निर्वीजयोगस्य परा काष्ठा भवति अपुनर्व्युत्थानीत्यर्थः। सर्वनिरोधादितिसूत्रावयवेन निर्वीजत्वे हेतुरुक्तः। यतः प्रज्ञा तत्संस्कारश्च सर्वोऽपि अत्यन्तं विलयितोऽतो निर्वीजः। दुःखवोजैः संस्कारादिभिः शून्य इत्यर्थः। पूर्वपूर्वासम्प्रज्ञातव्यक्तिषु च क्रमेण वीजतानवाद्नीणं निर्वीजत्वमसम्प्रज्ञातलक्षणे पूर्वं भाष्यकृतोक्तमिति स्मर्त्तव्यं तथा च चरमासम्प्रज्ञाते सर्वे प्रज्ञासंस्काराः क्षीयन्त इत्यतो न ते चित्तं साधिकारं कुर्वन्तीति भावः। एतेनासम्प्रज्ञातपरम्परायाः प्रज्ञासंस्कारात्यन्तलयः फलं सूत्रेणोक्तं, सूत्रस्यस्यापि शब्दस्यार्थं भाष्यकारो व्याचष्टे। स न केवलमिति। स सामान्यनिर्वीजयोगः न केवलं समाधिप्रज्ञाया विरोधी भावाभावरूपेण अपि तु क्रमेण प्रज्ञाकृतसंस्काराणामपि प्रतिबन्धी अत्यन्तमभिभावक इत्यर्थः। ननु यदि प्रज्ञाकृतसंस्काराणामप्यसम्प्रज्ञातो बाधकस्तर्हि सकृदसम्प्रज्ञातादेव सर्वसंस्कारबाधे व्युत्थानं कदापि कस्यापि न स्यादित्याशयेनाक्षिपति। कस्मादिति। परिहरति। निरोध इति। न निरोधः साक्षादेव प्रज्ञासंस्कारान् विलापयति किन्तु निरोधपरम्पराजन्यो दृढ़तरः संस्कार एव प्रज्ञासंस्कारानत्यन्तं विलापयतीत्यर्थः। दृढ़तरत्वञ्च जातिविशेष इत्युक्तम्। ननु ज्ञानस्यैव संस्कारजनकत्वं दृष्टं निरोधस्तु न ज्ञानं संस्कारशेषचित्तावस्थाविशेषमात्रत्वादतस्तस्य संस्कारजनकत्वे किं प्रमाणमित्याशङ्क्याह। निरोधस्थितीति। निरोधस्थितौ असम्प्रज्ञातावस्थाने यो मुहूर्त्ताहोरात्रमासादिरूपः कालक्रमः क्रमेण कालवृद्धिस्तद्दर्शनेन निरोधावस्थचित्तजन्यः संस्कारोऽनुमेयः संस्कारवृद्धिव्यतिरेकेण तद्वि-

थामकासम्भवादित्यर्थः। सम्प्रज्ञातस्य तु कालवृद्धिः प्रज्ञासंस्कारतारतम्ये नैवोपपद्यत इत्यतो न सम्प्रज्ञातस्य संस्कारहेतुतेति। ननु प्रज्ञासंस्कारश्चरमासम्प्रज्ञातेन अत्यन्तं बाध्यतां निरोधसंस्कारास्तु कुतः समुच्छिद्यन्ते तदनुच्छेदे च साधिकारत्वमेव चित्तस्येति मोक्षानुपपत्तिः। किञ्च प्रलीनानामपि संस्काराणां कदाचिद्योगीश्वरसङ्कल्पादिना दग्धबीजस्येव पुनरुद्बोधोऽपि सम्भाव्येतेत्याशङ्कामपाकरोति। व्युत्थाननिरोधेति। असम्प्रज्ञातापेक्षया समाधिप्रज्ञापि व्युत्थानम्। अतो व्युत्थानं ज्ञानसामान्यं निरोधसमाधिश्चासम्प्रज्ञातस्तदुभयप्रभवैः सह सहितैः कैवल्यभागीयैः कैवल्यहेतुकर्मसंस्कारैर्विशिष्टं चित्तं स्वकीयप्रकृतौ नित्यायां स्वयमेव प्रलीयते दग्धेन्धनानलवदात्यन्तिकलयं गच्छति परिणामस्वाभाव्यात् तत्स्वामिपुरुषस्य भोगहेतुर्विसदृशपरिणाम एव हि पुनर्न भवति तद्धेतोः पुरुषार्थस्याभावादित्यर्थः। अथ वा कैवल्यभागीयैः कैवल्यपर्य्यन्तस्थायिभिर्व्युत्थानसंस्कारैः सहेति चित्तविशेषणम्। अनेन सूत्रेण शङ्कानिराकरणमुपपादयति। तस्मादिति। तस्मान्निरोधसंस्कारस्यापि क्षयात्ते निरोधसंस्कारा इत्यादिरर्थः। ननु भवतु योगद्वयाच्चित्तस्यात्यन्तिकलयस्तथापि पुरुषार्थः कः सिध्यतीत्याकाङ्क्षायामाह यस्मादित्यादि। यस्माच्चित्तं निवर्त्तते अतस्तस्मिन्निवृत्ते सति पुरुषो मुक्त इत्युच्यते तत्र हेतुगर्भविशेषणानि स्वरूपेत्यादीनि। स्वरूपमात्रप्रतिष्ठः पररूपैः प्रतिबिम्बितदुःखादिभिर्मुक्तः शुद्धः स्वत्वसम्बन्धेन पुण्यपापमुक्तः। भोगसाधनत्वस्यैव स्वत्वतया कूटस्थस्यापि संसारदशायां स्वत्वाभ्युपगमात्। एतादृशमुक्तेः साध्यत्वमुपपन्नं केवल उपाधिसंयोगाख्यबन्धमुक्त इत्यर्थः। एवंरूपो मोक्ष एव योगस्य मुख्यं फलमित्याशयः। पारमार्थिको दुःखकर्मादिसम्बन्धो लेपाख्यसंयोगरूपसम्बन्धो वा लोके बन्ध इत्युच्यते तन्मुक्तिश्च बुद्धेरेव न

कूटस्थस्यासङ्गस्य पुरुषस्येति प्रतिपादयितुं मुक्त इत्युच्यत इत्युक्तं शास्त्रेषु मुक्त इति व्यवहारमात्रं क्रियत इति तस्यार्थः। तदुक्तं सांख्यसूत्रेण 'वाङ्मात्रं न तु तत्त्वं चित्तस्थिते'रिति। पुरुषे बन्धादिकं वाङ्मात्रं चित्त एव बन्धाद्यवस्थानादित्यर्थः। पुरुषार्थत्वञ्च पारमार्थिकमेव दुःखं मा भुञ्जीयेति प्रार्थनादिति भावः। सांख्यप्रवचन इति। सांख्यशास्त्रस्यैव प्रकर्षेण वचनं सांख्यप्रवचनं सांख्ये हि अभ्युपगमवादेनेश्वरं प्रतिषिध्य असम्प्रज्ञातयोगनैरपेक्ष्येण च जीवतत्त्वज्ञानादेव मोक्ष उक्तोऽस्मिंस्तु शास्त्रे निरुपद्रवसन्दिग्धैच्छिकमुक्तिनियमाय परमेश्वरविद्या आशुमोक्षहेतुरसम्प्रज्ञातयोगश्च प्रदर्शित इति भावः॥ ५१॥

इति श्रीपातञ्जलभाष्यवार्त्तिके श्रीविज्ञानभिक्षुनिर्मिते प्रथमः समाधिपादः।

---

## अथ द्वितीयः साधनपादः।

उद्दिष्टः समाहितस्य योगः, कथं व्युत्थितचित्तोऽपि योगयुक्तः स्याद् इति एतदारभ्यते।

*** तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः॥ १॥ ***

न अतपस्विनो योगः सिध्यति, अनादिकर्मक्लेशवासनाचित्रा प्रत्युपस्थितविषयजाला चाशुद्धिर्नान्तरेण तपःसम्भेदमापद्यते इति तपस उपादानं, तच्च चित्तप्रसादनमबाधमानमनेन आसेव्यमिति मन्यते। स्वाध्यायः प्रणवादिपवि-

## त्राणां जपः, मोक्षशास्त्राध्ययनं वा। ईश्वरप्रणिधानं सर्वक्रियाणां परमगुरौ अर्पणं, तत्फलसन्न्यासो वा ॥ १ ॥

## स हि क्रियायोगः।

ननु प्रथमपादेनैव योगः सोपायः सफलश्च अवान्तरभेदैः सह प्रोक्तः तत्किमपरमवशिष्यते यदर्थं द्वितीयपाद आरब्धव्य इत्याकाङ्क्षायामाह। उद्दिष्ट इति। समाहितचित्तस्य योगारूढचित्तस्योत्तमाधिकारिणोऽभ्यासवैराग्यमात्रसाधनेनैष क्रियायोगादिसकलाङ्गानां नैरपेक्ष्येण पूर्वपादे योगः प्रदर्शितः तेषां वहिरङ्गत्वं वक्ष्यति 'त्रयमन्तरङ्गं पूर्वेभ्य' इति सूत्रेण तदभावेऽपि भावादिति भाष्येण च। तथा चोक्तमाश्वमेधिके।

अपेतव्रतकर्मा तु केवलं ब्रह्मणि स्थितः।
ब्रह्मभूतश्चरन् लोके ब्रह्मचारीति कथ्यते ॥

इति। तथा गारुडेऽपि

आसनस्थानविधयो न योगस्य प्रसाधकाः।
शिशुपालः सिद्धिमाप स्मरणाभ्यासगौरवात् ॥

इति। ते च अभ्यासवैराग्ये न सर्वेषां द्रागित्येव भवतः, अतो व्युत्थितचित्तो वहिर्मुखोऽपि योगारुरुक्षुः क्रमात् केनोपायेन योगयुक्तः स्यादिति तमुपायं वक्तुमेतत् सूत्रजातमारभत इत्यर्थः। तदेवमधिकारभेदेन साधनभेदो गारुडादिष्वप्युक्तः।

आरुरुक्षुयतीनाञ्च कर्मज्ञाने उदाहृते।
आरूढयोगवृक्षाणां ज्ञानत्यागौ परौ मतौ ॥

इति।

त्यागो वाह्यकर्मणाम्। गीतायामपि।

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥

इति । कारणं योगस्य ।

योगोपायत्वाद् योगः, क्रिया चासौ योगश्चेति विग्रहः तपआदीनि त्रीणि क्रियायोग इत्यर्थः । ईश्वरप्रणिधानरूपो भक्तियोगोऽपि अत्र क्रियायोगमध्य एव प्रवेशितः । अतो 'योगास्त्रयो मया प्रोक्ता भक्तिज्ञानक्रियात्मका' इत्यादिस्मृतिषु त्रय एव योगोपायत्वाद्योगा उक्ताः, तत्र ज्ञानयोगो धारणाध्यानसमाधिरूपः पूर्वपादे प्रोक्तः विस्तरस्तु अस्याग्रे भविष्यतीति । यद्यपि यमादयोऽपि क्रियायोगास्तथापि वक्ष्यमाणयमनियमादिषु मध्ये तपआदित्रयं प्रकृष्टतया आदौ पृथङ्निर्दिष्टं केवलेनैतेनापि तीव्रतरेण योगो भवतीति सूचयितुमिति बोध्यम् । ननु स्वाध्यायेश्वरप्रणिधानञ्च तत्त्वज्ञानेश्वरानुग्रहाभ्यां योगोपकारकं स्यात् तपस्तु देहेन्द्रियशोषणात्मकं केन द्वारेण योगस्योपकारकं भवतु प्रत्युत चित्तक्षोभकत्वेन योगविरोध्येवेत्याशङ्क्य तपसो द्वारमाह । न अतपस्विन इति । असिद्धौ हेतुमाह । अनादीति । अनादिक्लेशकर्मवासनया हेतुना चित्रा नानाविधा अशुद्धिः पापाख्या प्रत्युपस्थापितविषयजालतया योगविरोधिनी तपो विना न सम्भेदं तनुतामापद्यत इत्यर्थः । इतीति । इत्यतः साधनमध्ये तपसो ग्रहणमित्यर्थः । योगविरोधशङ्कामपाकरोति । तच्चेति । तच्च तपश्चित्तप्रसादाविरोधि मृदु एवानेन योगिना कर्त्तव्यमिति परमर्षिभिर्मन्यत इत्यर्थः । पवित्राणां पापक्षयहेतूनाम् । प्रथमपादोक्तप्रणिधानादतिरिक्तमत्र प्रणिधानमाह । सर्वक्रियाणामिति । लौकिकवैदिकासाधारण्येन सर्वकर्मणां परमेश्वरेऽन्तर्यामिणि अर्पणमित्यर्थः ।

तदुक्तं गीतायाम् ।

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय! तत् कुरुष्व मदर्पणम्॥

इति। अर्पणञ्च

कामतोऽकामतो वापि यत्करोमि शुभाशुभम्।
तत्सर्वं त्वयि सन्न्यस्तं त्वत्प्रयुक्तः करोम्यहम्॥

इत्यादिस्मृतिभिर्व्याख्यातमिति। त्वत्प्रयुक्तः करोम्यहमिति चिन्तनमेव सन्न्यास इत्यर्थः। अत्र प्रयोक्तृत्वमन्तर्यामिविधयैव न तु श्रुतिद्वारा अशुभकर्मसु श्रुत्यभावादिति। एतदपेक्षयापि प्रकृष्टं द्विविधं कर्मार्पणान्तरं कौर्मे प्रोक्तम्।

ब्रह्मणा दीयते देयं ब्रह्मणे सम्प्रदीयते।
ब्रह्मैव दीयते चेति ब्रह्मार्पणमिदं परम्॥
नाहं कर्त्ता सर्वमेतत् ब्रह्मैव कुरुते तथा।
एतत् ब्रह्मार्पणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः॥

इति। तत्फलेति। एतदपि कौर्मे प्रोक्तम्।

यद्वा फलानां सन्न्यासं प्रकुर्य्यात् परमेश्वरे।
कर्मणामेतदप्याहुर्ब्रह्मार्पणमनुत्तमम्॥

इति। कर्मफलानामीश्वरो भोक्तेति चिन्तनं कर्मफलसन्न्यासः। भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरमित्यादिवाक्यात्। तदुक्तम्। 'करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत् तदि'ति। यज्ञादीनां हि इन्द्रादिभावापन्नस्यान्तर्यामिणो भोग एव मुख्यं फलं 'येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः। तेऽपि मामेव कौन्तेय! यजन्त्यविधिपूर्वक'मित्यादिवाक्येभ्य इति। ननु अत्र वाक्ये विष्णाख्यदेवताविशेषस्यैवेतरदेवतायजनेन यजनं प्रोक्तं न परमात्मन इति चेन्न। परं हि ब्रह्म कथितं योगयुक्तेन तन्मयेत्यनुगीतावाक्यतः श्रीकृष्णस्य भगवद्गीतायां परमात्मोपदेशस्यैव लाभादिति। यद्यपि ईश्वरस्य भोगो नित्यः तथापि

सिद्धत्वाद्युत्पत्तिवत् तदुत्पत्तिर्गौणी। यज्ञादिसहकारेणैव फल-दातृतयेश्वरप्रीतेरभिव्यक्तेः। ननु ईश्वरप्रणिधानमत्र पूर्वपादोक्त-भावनारूपमेव कथं न भवति तत्राह। स हि क्रियायोग इति। स हि स एव फलसन्न्यासः कर्मार्पणञ्च क्रियायोगो भवति कर्म-शेषत्वात् तज्जपस्तदर्थभावनमिति पूर्वोक्तञ्च भावनारूपं प्रणि-धानं ज्ञानमेव कर्मतच्छेषत्वयोरभावादित्यर्थः। उत्तरसूत्रेण सहान्वये तुहिशब्दवैयर्थ्यमिति बोध्यम्। तेषां योगद्वारमाह॥१॥

* समाधिभावनार्थः क्लेशतनूकरणार्थश्च॥२॥ *

स हि आसेव्यमानः समाधिं भावयति, क्लेशांश्च प्रतनूकरोति, प्रतनूकृतान् क्लेशान् प्रस-ङ्ख्यानाग्निना दग्धबीजकल्पान् अप्रसवधर्मिणः करिष्यतीति, तेषां तनूकरणात् पुनः क्लेशैरपरा-मृष्टा सत्त्वपुरुषान्यताख्यातिः सूक्ष्मा प्रज्ञा समा-प्ताधिकारा प्रतिप्रसवाय कल्पिष्यते इति॥ २॥

अथ के ते क्लेशाः कियन्तो वेति।

उभयार्थत्वे हेतुमाह। स हीति। आ सम्यक् निष्कामा-दिरूपेण सेव्यमानः स हि स एव कर्मयोगः। कर्मातिरिक्तवि-षयेभ्यो निरुद्धवृत्तिकं निष्पापञ्च चित्तं करोति ततः क्रमेण सत्त्वोद्रेकादेकाग्रमन्यत्रापि करोति। अविद्यादिकञ्च प्रकर्षेण अनायासेन तनूकरोति सत्त्वशुद्ध्यादिद्वारेत्यर्थः। उत्तमाधिका-रिणश्च समाधियोग्यता क्लेशतनुता च सिद्धैवेत्यतः पूर्वपादे तदुभयं योगसाधनतया नोक्तम्। ननु अविद्यादीनां क्लेशानां

नाशेनैव संसारोच्छेदः प्रतनूकरणेन तु किं प्रयोजनमित्याकाङ्क्षायामाह। प्रतनूकृतानिति। प्रतनूकृतांश्च शुष्केन्धनतुल्यान् कृतान् क्लेशान् क्रियायोगः स्वयमुद्दीपितेन प्रसंख्यानाग्निना विवेकख्यातिवह्निना दग्धवीजवदप्रसवधर्मिणोऽप्रसवस्वभावान् संस्काराजनकान् करिष्यति जीवन्मुक्तिदशायामिति शेषः। प्रसंख्यानाग्निज्वालने तनूकरणस्य द्वारं वदन् पूर्वोक्तार्थमुपसंहरति। तेषामिति। अपरामृष्टा अनभिभूता, तथा च अनभिभव एव तनूकरणस्य द्वारमिति। सूक्ष्मेति। सूक्ष्मविषयत्वात् सूक्ष्मा साक्षात्काररूपिणी प्रज्ञा क्रमेण समाप्तकर्त्तव्या सती चरमासम्प्रज्ञाते प्रतिप्रसवाय प्रलयाय कल्पिष्यते विदेहकैवल्यदशायामिति शेषः। तदेवं क्रियायोगस्य मोक्षज्ञानादिव्यापारकथनात् कर्मयोगो ज्ञानादिसाधनतया ज्ञानाद्यङ्गमेव न साक्षान्मोक्षहेतुरिति सिद्धान्त इति। उत्तरसूत्रावताराय पृच्छति। अथेति ॥२॥

* अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः ॥ ३ ॥ *

क्लेशा इति पञ्च विपर्य्यया इत्यर्थः। ते स्यन्दमाना गुणाधिकारं द्रढ़यन्ति, परिणाममवस्थापयन्ति, कार्य्यकारणस्रोत उन्नमयन्ति, परस्परानुग्रहतन्त्रीभूत्वा कर्मविपाकं चाभिनिर्हरन्ति इति ॥ ३ ॥

पञ्च विपर्य्यया इति पूरयित्वा संक्षेपतः सूत्रार्थमाह। क्लेशा इतीति। इतिशब्दोऽविद्यादिपरामर्शी तथा च अविद्यास्मितारागद्वेषाभिनिवेशा इति पञ्च विपर्य्ययाः क्लेशा इत्यर्थ इति योजना। अत्र कियन्त इति प्रश्नस्योत्तरं पञ्चेत्यनेन। के ते इत्यस्य

चोत्तरं विपर्य्यया इत्यनेनाह । पञ्च विपर्य्यया इति । अत्र पञ्चेति अर्थादेव लब्धं विपर्य्यया इति च पूरितं विशेषलक्षणस्य च सामान्यलक्षणपूर्वकत्वौचित्यात् विपर्य्ययशब्दस्य अत्र संसारहेतुविपर्य्ययार्थकः अतो न शुक्तिरजतविपर्य्यये क्लेशलक्षणातिव्याप्तिः रागादीनाञ्च विपर्य्ययकार्य्यतया विपर्य्ययत्वं चेष्टम् । प्रकृतस्य संसारहेतुविपर्य्ययस्य लक्षणमदृष्टसामान्यहेतुमनोविशेषगुणत्वमिति । ननु क्लेशशब्दो दुःखवाची किमिति अविद्यादिषु परिभाषितः किमर्थं वा तेषामुच्छेदोपेक्षित इत्याकाङ्क्षायामाह । ते स्यन्दमाना इति । ते क्लेशाः स्यन्दमाना लब्धवृत्तिका दृष्टादृष्टद्वारा गुणानां सत्त्वादीनाम् अधिकारं कार्य्यारम्भणसामर्थ्यं द्रढयन्ति बलवत् कुर्वन्ति तथा गुणानां परिणामं वैषम्यरूपमवस्थापयन्ति निर्वर्त्तयन्ति ततश्च महदादिरूपकार्य्यकारणप्रवाहमुन्नमयन्ति प्रवर्त्तयन्ति । यदर्थमेतत् सर्वं कुर्वन्ति तद्दर्शयति । परस्परेति । कर्मविपाकं जात्यायुर्भोगञ्च अभिनिर्हरन्ति निष्पादयन्ति । किं स्वतन्त्रा एव, नेत्याह । परस्परानुग्रहतन्त्री भूत्वेति । अविद्यातो रागो रागाच्च अविद्येत्येवमादिरूपान्योन्यानुग्रहाधीना भूत्वेत्यर्थः । अन्योन्यसाहित्येनैव हि क्लेशानां स्थैर्य्यं भवति येन स्थैर्य्येण विपाकपरम्परा निर्वहतीति भावः । तथा च क्लेशाख्यदुःखदत्वात् अविद्यादीनां क्लेशपरिभाषा तान्त्रिकी तथा दुःखनिदानतया अविद्यादयः समुच्छेत्तव्या इति भावः । क्लेशानां स्थूलसूक्ष्माणां सर्वेषामेव ज्ञाननाश्यत्वं वक्ष्यमाणमुपपादयितुम् अविद्यामूलकत्वमन्यक्लेशानामाह ॥ ३ ॥

*** अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् ॥ ४ ॥ ***

**अत्र अविद्या क्षेत्रम् प्रसवभूमिः, उत्तरेषाम्**

अस्मितादीनां चतुर्विधकल्पितानां प्रसुप्ततनुविविच्छिन्नोदाराणाम्। तत्र का प्रसुप्तिः। चेतसि शक्तिमात्रप्रतिष्ठानां वीजभावोपगमः, तस्य प्रबोध आलम्बने सम्मुखीभावः, प्रसङ्ख्यानवतो दग्धक्लेशवीजस्य सम्मुखीभूतेऽपि आलम्बने नासौ पुनरस्ति, दग्धवीजस्य कुतः प्ररोह इति, अतः क्षीणक्लेशः कुशलश्चरमदेह इत्युच्यते, तत्रैव सा दग्धवीजभावा पञ्चमी क्लेशावस्था नान्यत्रेति, सतां क्लेशानां तदा वीजसामर्थ्यं दग्धमिति विषयस्य सम्मुखीभावेऽपि सति न भवत्येषां प्रबोध, इत्युक्ता प्रसुप्तिर्दग्धवीजानामप्ररोहश्च। तनुत्वमुच्यते, प्रतिपक्षभावनोपहताः क्लेशास्तनवो भवन्ति। तथा विच्छिद्य विच्छिद्य तेन तेन आत्मना पुनः समुदाचरन्ति इति विच्छिन्नाः, कथं, रागकाले क्रोधस्य अदर्शनात्, न हि रागकाले क्रोधः समुदाचरति, रागश्च क्वचिद् दृश्यमानो न विषयान्तरे नास्ति, नैकस्यां स्त्रियां चैत्रो रक्त इति अन्यासु स्त्रीषु विरक्त इति किन्तु तत्र रागो लब्धवृत्तिः अन्यत्र भविष्यद्वृत्तिरिति, स हि तदा प्रसुप्ततनुविच्छिन्नो

भवति। विषये यो लब्धवृत्तिः स उदारः। सर्व एवैते क्लेशविषयत्वं नातिक्रामन्ति। कस्तर्हि विच्छिन्नः प्रसुप्तस्तनुरुदारो वा क्लेश इति, उच्यते, सत्यमेवैतत्, किन्तु विशिष्टानामेवैतेषां विच्छिन्नादित्वं यथैव प्रतिपक्षभावनातो निवृत्तस्तथैव स्वव्यञ्जकाञ्जनेन अभिव्यक्त इति, सर्व एव अमी क्लेशा अविद्याभेदाः, कस्मात् सर्वेषु अविद्यैवाभिप्लवते, यदविद्यया वस्तु आकार्य्यते तदेवानुशेरते क्लेशाः, विपर्य्यासप्रत्ययकाले उपलभ्यन्ते क्षीयमाणां चाविद्याम् अनुक्षीयन्त इति ॥ ४ ॥

तत्र अविद्यास्वरूपमुच्यते।

निमित्तकारणस्यापि प्रसवभूमित्वं प्राधान्यमात्रेण गौणं व्यताख्यास्यते। अत्रेति। अत्र एतेषु क्लेशेषु मध्ये चतुर्भेदानामस्मितादिक्लेशानामित्यादिरर्थः। प्रसुप्तादीनां सर्वेषामेव अविद्यासत्त्वे सत्त्वं तदभावे तदभाव इत्याशयः। तेषां चतुर्विधभेदं विवृणोति। तत्र का प्रसुप्तिरिति। चेतसि शक्तिमात्रेण अनागतावस्थया अवस्थितानामस्मितादीनां वीजभावोपगमः स्वकार्य्यजननसामर्थ्यं प्रसुप्तिरित्यर्थः। अस्माद्वाक्यात् कार्य्यस्य अनागतावस्थैव कारणे कार्य्यशक्तिरिति लब्धं सैव च उपादानकारणतेति भावः। दग्धवीजभावां पञ्चमीमवस्थां व्यावर्त्तयितुं वीजभावोपगम इत्युक्तं दग्धवीजभावानां च अस्मितादीनां पुनरप्रसवादविद्या न चेत्वमिति सा पञ्चमी अवस्था न लभ्येति भावः। कदा-

चित् प्रबोधसत्त्वे एव सुषुप्तिः सम्भवतीत्यतः प्रबोधमपि दर्शयति। तस्येति। तस्य सुप्तक्लेशस्य स्वस्वविषये सम्मुखीभावोऽभिव्यक्तिः प्रबोध इत्यर्थः। पञ्चमावस्थायामतिव्याप्त्यभावं प्रतिपादयति। प्रसंख्यानेति। प्रसंख्यानवतो विवेकसाक्षात्कारिणो जीवन्मुक्तस्य दग्धक्लेशबीजतया सम्मुखीभूते सन्निकृष्टेऽपि विषये असौ क्लेशानां सम्मुखीभावः पुनर्न भवति। तत्र हेतुर्दग्धबीजस्य कुतः प्ररोह इतीति। कारणाभावादित्यर्थः। तत्र तस्य पुनः क्लेशाप्ररोहे, शास्त्रप्रसिद्धं चरमदेहकत्वं प्रमाणयति। अत इति। पुनः प्ररोहे सति देहान्तरोत्पत्त्या ज्ञानिदेहस्य चरमत्वानुपपत्तिरिति भावः। तथा च स्मर्य्यते।

बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः।
ज्ञानदग्धैस्तथा क्लेशैर्नात्मा सम्पद्यते पुनः॥

इति। ज्ञानदग्धैः क्लेशरूपबीजैर्हेतुभिरात्मा देही न पुनरुत्पद्यत इत्यर्थः। क्लेशाख्यबीजदाहादित्यर्थः। दग्धबीजभावाया अवस्थाया अपरिगणने बीजमाह। तत्रैवेति। तत्रैव चरमदेह एव दग्धबीजावस्था नान्यत्र पुनर्जन्माभावादित्यर्थः। अतो नास्ति दग्धबीजावस्थस्य प्रसवो नापि तत्प्रसवभूमिरविद्येति भावः। जीवन्मुक्तानां विषयसन्निकर्षेऽपि क्लेशानभिव्यक्तेः क्लेशसंस्कार एव तदा नास्ति विदेहकैवल्य इवेति भ्रमं निरस्यति। सतामिति। सूक्ष्मरूपेण सतामेव क्लेशानां तदा चरमदेहे बीजसामर्थ्यं कार्य्यजननसामर्थ्यं दग्धं नाशितमित्यादिरर्थः। अग्न्यादौ दाहादिशक्तेर्यावद्द्रव्यभावितादर्शनात् चित्तेन सहैव क्लेशशक्तेरशेषतो नाशसम्भवात्। तच्च ते प्रतिप्रसवहेयाः सूक्ष्मा इति सूत्रे व्यक्तीभविष्यति। उपसंहरति। इत्युक्ता प्रसुप्तिर्दग्धबीजानामप्ररोहश्चेति। शिष्यावधानाय क्रमप्राप्तं तनुत्वस्य निर्वचनं प्रतिजानीते। तनुत्वमुच्यत इति। प्रतिपक्षेति। क्लेशप्रतिपक्षः

क्रियायोगः तस्य भावनमनुष्ठानं तेनोपहताः क्लेशास्तनवो विवेकख्यातिप्रतिबन्धाच्चमा भवन्ति, एतदेव तनुत्वमिति शेषः। केचित्तु सम्यग्दर्शनं श्रवणादिरूपं परोक्षमविद्यायाः प्रतिपक्षः एवं भेददर्शनमस्मितायाः अहेयानुपादेयताज्ञानरूपं माध्यस्थ्यं रागद्वेषयोः उपकरणाख्यानुबन्धबुद्धिनिवृत्तिरभिनिवेशस्य एतेषां भावनेनानुष्ठानेनोपहता इत्यर्थमाहुः। विच्छित्तिं व्याचष्टे। तथेति। क्लेशानामन्यतमेनाभिभवादत्यन्तविषयसेवनाद्वा विच्छिद्य विच्छिद्य तेन तेनात्मना पूर्ववदतनुभावेनैव पुनः समुदाचरन्ति आविर्भवन्तीत्यतो विच्छिन्नशब्दवाच्या भवन्तीत्यर्थः। अत्र वीप्सया विच्छेदसमुदाचारयोः पौनःपुन्यं दर्शयता प्रसुप्तात् भेद उक्तः। प्रसुप्तिर्हि क्लेशानां व्यञ्जकविलम्बेनैकद्वित्रिजन्मादिबहुकालं व्यापारानभिव्यक्तिः। विच्छिन्नता तु स्वल्पप्रतिबन्धतः क्लेशप्रवाहस्य अल्पकालमन्तरान्तरानभिव्यक्तिरिति भेदः, तेन तेनात्मनेत्यनेन च तन्ववस्थातो भेद उक्त इति। विच्छेदे प्रमाणं पृच्छति। कथमिति। उत्तरं, रागेति। रागकाले क्रोधस्य अदर्शनात् क्रोधस्य विच्छिन्नता सिध्यतीत्यर्थः। तदा क्रोधाभावे च पुनः क्रोधोत्पत्त्यसम्भवः असत्कार्य्यानभ्युपगमादिति भावः। एवं क्लेशान्तरेऽपि द्रष्टव्यम्। रागकाले क्रोधस्य विच्छेदे च विरोधो वीजमित्याह। न हीति। कालिकविच्छेदं क्लेशानाम् उदाहृत्य दैशिकविच्छेदमप्युदाहरति। रागश्चेति। विषयान्तरे न नास्ति अपि तु विच्छिन्नावस्थस्तत्रापि अन्यथा असदुत्पादासम्भवादित्यर्थः। अतो विषयान्तरे तदा रागेण विच्छिन्न इति भावः। तदेवं लोकव्यवहारेणाप्यवधारयति। नैकस्यामिति। तत्र एकस्यां स्त्रियामित्यर्थः। स हीति। स हि रागस्तदा अन्यत्र प्रसुप्तो वा तनुर्वा विच्छिन्नो वा एकतरोऽवश्यं भवति तत्र विच्छिन्नतामादाय अत्रोदाहृत इत्याशयः। उदारतां व्याचष्टे। विषये

इति। लब्धवृत्तिर्लब्धस्वाभाविकवृत्तिरित्यर्थः। तेन तनुव्यावृत्तिः। ननु प्रसुप्तविच्छिन्नयोः कथं क्लेशत्वं दुःखाजनकत्वादित्याशङ्काह। सर्व एवैत इति। क्लेशविषयत्वं क्लेशजननयोग्यत्वं न अतिक्रामन्ति उदाराद्यवस्थायां प्रसुप्तादिरूपस्य धर्म्मिणो दुःखदत्वादित्यर्थः। ननु एवं सर्वासामेव क्लेशव्यक्तीनां कालभेदाच्च आनुरूप्ये कथं प्रसुप्तादिरूपेण क्लेशानां विभाग इत्याशङ्कते। कस्तर्हीति। परिहरति। उच्यत इति। प्रसुप्तादिरूपेण चतुर्णां क्लेशानामेकत्वमिति सत्यमेतत्। तथापि अवस्थाभिर्विशिष्टानामेव क्लेशानां विच्छिन्नादित्वं विवक्षितं यथैकस्यैव पुरुषस्य बालकतरुणवृद्धादिरूपो विभाग इत्यर्थः। उक्ताया उदारावस्थायाः कारणं प्रदर्शयति हानाय। यथैवेति। स्वव्यञ्जकेन विषयध्यानेनाञ्जनेन अभिव्यक्त उदारो भवति क्लेशः, अतो मुमुक्षुणा प्रतिपक्षभावनावद्विषयसङ्गत्यागोऽपि कार्य्य इत्याशयः। निमित्तकारणेऽपि चेतशब्दो येन गुणेन अत्र गौणस्तमाह। सर्व एवेति। ननु रागादीनां ज्ञानत्वाभावात् कथमविद्याविषयत्वमित्याशयेन पृच्छति। कस्मादिति। उत्तरं, सर्वेष्विति। सर्वेषु एव स्वेतरक्लेशेषु अविद्यैव व्यापिका भवति तत्र हेतुर्यदिति विषयीक्रियते। अनुशेरते अनुगता भवन्ति, शेषं सुगमं, तथा च वैशेष्यात् तद्वाद इति न्यायेन अविद्याप्राचुर्य्यात् अविद्यामिश्रितेषु सर्वक्लेशेषु अविद्याभेदवत्त्वमुपपन्नं यथा सुवर्णादिषु पार्थिवांशमिश्रितेषु तेजोवैशेष्यात् तेजोभेदत्वमिति भावः। अविद्यैव मूलं दुःखबीजम् इत्युक्तमिदानीं पञ्च क्लेशान् पञ्चभिः सूत्रैः क्रमेण लक्षयति॥ ४॥

*** अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या॥ ५॥ ***

अनित्ये कार्य्ये नित्यख्यातिः, तद्यथा ध्रुवा पृथिवी, ध्रुवा सचन्द्रतारका द्यौः, अमृता दिवौकस इति।

तथा अशुचौ परमबीभत्से काये उक्तञ्च "स्थानाद्बीजादुपष्टम्भान्निस्यन्दान्निधनादपि। कायमाधेयशौचत्वात् पण्डिता ह्यशुचिं विदुः" इत्यशुचौ शुचिख्यातिर्दृश्यते, नवेव शशाङ्कलेखा कमनीयेयं कन्या मध्वमृतावयवनिर्मितेव चन्द्रं भित्त्वा निःसृतेव ज्ञायते नीलोत्पलपत्रायताक्षी हावगर्भाभ्यां लोचनाभ्यां जीवलोकमाश्वासयन्तीवेति, कस्य केनाभिसम्बन्धो, भवति चैवमशुचौ शुचिविपर्य्यासप्रत्यय इति। एतेनापुण्ये पुण्यप्रत्ययस्तथैवानर्थे चार्थप्रत्ययो व्याख्यातः। तथा दुःखे सुखख्यातिं वक्ष्यति "परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः" इति, तत्र सुखख्यातिरविद्या। तथा अनात्मनि आत्मख्यातिः वाह्योपकरणेषु चेतनाचेतनेषु, भोगाधिष्ठाने वा शरीरे, पुरुषोपकरणे वा मनसि, अनात्मनि आत्मख्यातिरिति, तथैतदत्रोक्तं "व्यक्तमव्यक्तं वा सत्त्वमात्मत्वेन अभि-

प्रतीत्य तस्य सम्पदमनुनन्दति आत्मसम्पदं मन्यानस्तस्य व्यापदमनुशोचति आत्मव्यापदं मन्यमानः स सर्वोऽप्रतिबुद्ध" इति, एषा चतुष्पदा भवति अविद्या मूलमस्य क्लेशसन्तानस्य कर्माशयस्य च सविपाकस्य इति। तस्याश्चामित्रागोष्पदवद् वस्तु सतत्त्वं विज्ञेयम्, यथा नामित्रो मित्राभावो न मित्रमात्रं किन्तु तद्विरुद्धः सपत्नः, यथावा अगोष्पदं न गोष्पदाभावो न गोष्पदमात्रं किन्तु देश एव ताभ्यामन्यद् वस्त्वन्तरम्, एवमविद्या न प्रमाणं न प्रमाणाभावः किन्तु विद्याविपरीतं ज्ञानान्तरमविद्येति ॥ ५ ॥

अनित्यादिचतुष्टये क्रमेण नित्यादिबुद्धिरविद्येत्यर्थः। अविद्याचतुष्टयं क्रमेण व्याचष्टे उदाहरणानि च दर्शयति। अनित्य इति। अनित्यत्वमसत्त्वं कालनिष्ठाभावप्रतियोगित्वमिति यावत्। तस्यैव स्वरूपाख्यानं कार्य्य इति। नित्यत्वञ्च सत्त्वम्। तदुक्तं गारुडे।

अनात्मन्यात्मविज्ञानमसतः सत्स्वरूपता।
सुखाभावे तथा सौख्यं माया विद्याविनाशिनी ॥

इति। भगवद्गीतायाञ्च।

नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥

इति। असतः प्रागभावप्रतियोगिनो भावोऽविनाशित्वं

नास्ति सतश्च अनादिभावस्य अभावो विनाशो नास्तीत्यर्थः। अविनाशि तु तद्विद्वीत्याद्युत्तरवाक्यात् अत्र अभावप्रतियोगित्वरूपानित्यत्वमेव सत्त्वमुक्तमिति। इमामेवं असति सद्बुद्धिरूपामविद्यामादाय प्रपञ्च आविद्यक इति श्रुतिस्मृतिडिण्डिमः। तथा प्रपञ्चज्ञानस्य असति सदाकारकत्वात् भ्रमत्वमपि शुक्तिरजतादिज्ञानवद्गीयते इति उक्ताविद्यायाः प्रपञ्चमेवोदाहरणमाचार्य्योऽप्याह। ध्रुवेति। वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादिश्रुत्यापि प्रपञ्चस्य ईदृशमेवासत्यत्वमुक्तम्। परमबीभत्स इति। कुत्सितेऽपवित्र इति यावत्। कायस्याशुचित्वे श्रुतिं प्रमाणयति। उक्तञ्चेति। स्थानं मूत्राद्युपहतं मातुरुदरं बीजं शुक्रशोणिते उपष्टम्भो मातृभुक्तान्नादिरसः। निस्यन्दो नवद्वारैः रोमकूपादिभिश्च क्षरणं, निधनं मरणम्। एवमन्येऽशुद्धिहेतवः स्पष्टाः। तथा स्नानादिभिः शौचाधानादपि सदा स्वतोऽशुचित्वमनुमीयत इत्याह। आधेयशौचत्वादिति। ननु भवतु शरीरमशुचि तथापि तत्र शुचिख्यातौ किं प्रमाणमित्याकाङ्क्षायामाह। अशुचौ शुचिख्यातिर्दृश्यते इति। नवीनशशाङ्कवदियं कन्या कमनीया मधुनोऽमृतस्य वा अवयवैरंशैर्निर्मितेव दृश्यते। हावः शृङ्गारजा लीला कस्य स्त्रीकायस्य निकृष्टस्य केन चन्द्रकलादिना अतिनिर्मलेनाभिसम्बन्धः साधर्म्यम्। नास्त्येव विवक्षितसाधर्म्यमित्यर्थः। उपसंहरति। भवतीति। एतेनेति। एतेनाशुचौ शुचिख्यातेर्व्याख्या तेनापुण्ये तप्तशिलारोहणादौ हिंसादौ वा पुण्यप्रत्ययस्तथा अनर्थे अर्जनरक्षणादिना दुःखबहुलतया अपुरुषार्थे धनादौ अर्थप्रत्ययोऽपि अविद्यात्वेन व्याख्यातः। शुच्यशुचिशब्दयोर्योगोत्कृष्टसाधनासाधनमात्रोपलक्षकत्वादित्यर्थः। भाष्योक्तमपि अविद्याद्वयमन्यासामपि संसारहेतूनामविद्यानामुपलक्षकमतो न न्यूनता। तत्रेत्युत्तरग्रन्थेन दृ-

सोयामविद्यां व्याख्यातुमादौ वच्यमाणसूत्रमुखेन तस्योदाहरणं प्रदर्शयति । तथा दुःख इति । तथेत्यस्य तत्र सुखख्यातिरविद्येत्यनेनान्वयः । वच्यतीति । अर्थादिति शेषः । तत्रेति । जगद्रूपदुःख इत्यर्थः । अत्र च दुःखमेव सर्वं विवेकिन इत्यागामिसूत्रे दुःखसाधनतया दुःखबहुलतया च दुःखत्ववचनात् दुःखसाधने दुःखनिवृत्त्यात्यन्तिकसुखसाधनत्वबुद्धिः तथा दुःखप्रचुरे सुखप्रचुरत्वबुद्धिश्च तृतीया अविद्येति बोध्यम् । अन्यथा केवलदुःखे सुखभ्रमस्यासिद्धिरिति, चतुर्थीमविद्यां व्याचष्टे । तथा अनात्मनीति । उदाहरणं बाह्येति । बाह्यस्य देहस्य उपकरणेषु पुत्रादिषु अहंबुद्धिः तथा विषयभोगावच्छेदकतया अन्तःकरणस्योपकरणे शरीरेऽहंबुद्धिस्तथा भोग्यतया साचात् पुरुषस्योपकरणेऽन्तःकरणेऽहबुद्धिरित्यर्थः । इमामेव चतुर्थीमविद्यामादाय प्रपञ्चोऽविद्याकार्य्य इत्युच्यते । अहं कर्त्तेत्याद्यभिमानस्यैव धर्माधर्मोत्पत्तिद्वारा अखिलजगद्धेतुत्वात् इति । अत्र पञ्चशिखाचार्य्यसंवादमाह । तथेति । यथा मयोक्तं तथा । अत्र चतुर्थे अविद्याविषये पञ्चशिखेनाप्येतदुक्तमित्यर्थः । व्यक्ताव्यक्तं व्याकृताव्याकृतं स्थूलसूक्ष्मरूपं बुद्धिसत्त्वमात्मतया गृहीत्वा तस्य सत्त्वस्य सम्पत्तिं सत्यसङ्कल्पादिकं शुभवासनादृष्टादिकं चानुनन्दत्यात्मसम्पदं मन्वानस्तथा तस्य विपत्तिम् इच्छाविघातादिरूपादिकां च अनुशोचत्यात्मविपत्तिं मन्वान एवंविधो यः स सर्वोऽविद्वानित्येतदुक्तमित्यन्वयः । ननु शुक्तिरजतादिभ्रमरूपाणामविद्यानां कथमत्र गणना न कृतेत्याशङ्क्याह । एषेति । पशोरिव चत्वारि पदानि पादा अंशा यस्या इति चतुष्पदा एवम्भूतैषा संसारस्य मूलं भवतीत्यर्थः । तथा च संसाराहेतुतया नान्यासामत्र गणनमिति भावः । ननु विग्रहतोऽविद्याशब्दस्य विद्याभिन्नत्वं विद्याशून्यत्वमत्युत्तमविद्यात्वं वा अर्थः स्यात् न तु

विपरीतख्यातिरित्याशङ्क्याह। तस्याश्चेति। तस्याश्च अविद्यायाः सतत्त्वं तत्त्वं वस्तु एव विज्ञेयं न तु अभावोऽमित्रागोष्पदादिशब्दवदित्यर्थः। दृष्टान्तं विभजते। यथा नामित्र इति। न मित्राभाव इति। अत्राभावशब्देन संसर्गान्योन्याभावौ ग्राह्यौ न मित्रमात्रमिति। नास्ति मित्रं यस्मादिति व्युत्पत्त्या केवलमित्रमित्यर्थः। किन्तु तद्विरुद्धो मित्रविरुद्ध इत्यर्थः। तथा च निरूढलक्षणेति भावः। किन्तु देश एवेति। विपुलो देशविशेषोऽगोष्पद इति परिभाषितः। प्रमाणं विद्या। ज्ञानान्तरमिति। एतेन अविद्याशब्दस्य ज्ञानविशेषे रूढत्वावधारणात् आधुनिकवेदान्तिनामन्यार्थत्वोपवर्णनं स्वातन्त्र्यमात्रमवधेयम्। क्वाचित्कस्तु त्रिगुणात्मकप्रकृतौ अविद्याशब्दो गौणः। अविद्याधर्मकत्वात् अविद्यया आत्मन्यारोपितत्वात् जड़त्वाच्च। विद्याविद्याशब्दयोर्ज्ञानाज्ञानवाचित्वेनात्मानात्मवाचित्वादिति। अस्मिंश्च दर्शने सांख्यानामिव अविवेको न अविद्याशब्दार्थः किन्तु वैशेषिकादिवत् ।वा।श।८ज्ञानमिति। सूत्रभाष्याभ्यामवगन्तव्यम्। अविद्यानन्तरं तत्कार्यमस्मितां लक्षयति ॥ ५ ॥

* दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ॥६॥ *

पुरुषो दृक्शक्तिर्बुद्धिर्दर्शनशक्तिरित्येतयोः एकस्वरूपापत्तिरिव अस्मिता क्लेश उच्यते। भोक्तृभोग्यशक्त्योः अत्यन्तविभक्तयोरत्यन्ताऽसङ्कीर्णयोरविभागप्राप्ताविव सत्यां भोगः कल्पते, स्वरूपप्रतिलम्भे तु तयोः कैवल्यमेव भवति कुतो भोग इति। तथाचोक्तं "बुद्धितः परं पुरुषमाकार-

**शीलविद्यादिभिर्विभक्तमपश्यन् कुर्य्यात् तत्रात्म-बुद्धिं मोहेन" इति ॥ ६ ॥**

दृग् द्रष्टा दृश्यतेऽनेनेति दर्शनं करणं बुद्धिः प्रलयादौ फलोपधानं नास्तीति शक्तिग्रहणं तयोरेकात्मतेव स्वरूपतो धर्मतश्च अत्यन्तमेकाकारो विपर्य्ययोऽस्मिता अहङ्कार इत्यर्थः। एतदेव शब्दान्तरेणाह। पुरुष इत्यादिना। एकस्वरूपापत्तिरिव एकाकारो यः क्लेशः सोऽस्मिता उच्यत इत्यन्वयः। अविद्यातश्च अस्मितायाः अयं भेदो यद्बुद्ध्यादावादौ या सामान्यतोऽहंबुद्धिरथ च भेदाभेदेनाप्युपपद्यते अत्यन्ताभेदाग्रहणात् सैव अविद्या न तु तदुत्तरकालीनः पुरुषे बुद्ध्यादिगुणदोषारोप ईश्वरोऽहमहं भोगीत्यादिरूपः न वा दूरस्थवनस्पत्योरिव तयोरत्यन्तमेकताभ्रमः। अस्मिता तु एतदुभयरूपिणीति, भ्रमत्वाविशेषेऽपि कार्य्यकारणरूपावान्तरविशेषादविद्यास्मितयोर्भेदेनोपन्यास इति। अनयोश्च कार्य्यकारणभावो लोकानुसारेणावधार्य्यते, लोके हि आदौ कलत्रपुत्रभृत्यादिषु आत्मभावो जायते पश्चादेव तु तेषां सुखदुःखादिकमात्मनि अभिमन्यते तथा आदौ जलादिषु उपाधिषु प्रतिबिम्बादिरूपेण चन्द्राद्यारोपो भवति पश्चादेव तु चन्द्रादिषु तद्द्वारा कम्पमालिन्याद्यारोपो भवतीति। अयञ्च कार्य्यकारणभावः पूर्वसूत्रभाष्यस्थेन पञ्चशिखवाक्येनाप्युक्तः। तथा सांख्यकारिकायामपि पाठक्रमेणोक्तः॥

तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम्।
गुणकर्त्तृत्वे च तथा कर्त्तेव भवत्युदासीनः॥

इति। ननु बुद्धिपुरुषयोरन्योन्यारोपेणैवाहं दुःखीत्यादिव्यवहारोपपत्तौ एकात्मतारोपे किं प्रमाणं, परस्परारोपश्च व्यक्तयोरभेदग्रहं विनापि रङ्गरजतयोरिव सम्भवत्येव अग्निलोह-

योर्दूरस्थवनस्पत्योश्च पुनः स्फुटैक्यप्रत्ययदर्शनादभेदारोपः सिध्यति। आत्मबुद्ध्योस्तु परमसूक्ष्मतया नास्ति स्फुटमैक्यप्रत्यक्षमिति तत्राह। भोक्तृभोग्यशक्त्योरिति। अत्यन्तविविक्तयोरित्यत्र हेतुरत्यन्तासङ्कीर्णयोरत्यन्तविप्रकृष्टधर्मकयोरिति। भोग्यभोक्तृत्वे एव स्फुटे वैधर्म्ये अन्यथा कर्मकर्तृविरोधादिति भावः। एवम्भूतयोर्भोक्तृभोग्ययोः पुरुषबुद्ध्योरविभागप्राप्तौ इव सत्यामेकत्वप्रत्यये सत्येव भोगः सम्भवति भेदग्रहे तु तयोः कैवल्यमन्योन्यवियोग एव भवति परवैराग्यादित्यतः कथं भोगः स्यादित्यर्थः। तथा च भोगान्यथानुपपत्तिरेकात्मतारोपे प्रमाणमित्याशयः। अतएव सत्त्वपुरुषयोः प्रत्ययाविशेषो भोग इति सूत्रकृद्वदिष्यति। योऽहं सुखी सोऽहं तदनुभविता इत्येकाकारतैव च बुद्ध्यात्मप्रत्यययोरविशेषाद् यस्मिन् सत्येव च लोके भोगव्यवहार इति। जीवन्मुक्तस्य च गौण एव भोगः सुखादिसाक्षात्कारमात्ररूप इति वक्ष्यामः। इदं चोपलक्षणं सुखदुःखज्ञानाद्याश्रयोऽहम् एक एवेति प्रत्ययोऽपि एकात्मतारोपे प्रमाणं बोध्यम्। अस्मितायाः स्वरूपे अविद्याजन्यत्वे च पञ्चशिखाचार्य्यवाक्यं प्रमाणयति। तथा चोक्तमिति। परमार्थतो बुद्धितः परं पृथक्कृतं पुरुषं बुद्धेराकारशीलविद्यादिभिर्विविक्तमसंसृष्टमपश्यन् अविवेकी जनस्तत्र बुद्ध्याकारादिषु आत्मबुद्धिमस्मितां कुर्य्यात्। शान्ताद्याकारोऽस्मि जाग्रदादिशीलोऽस्मि विद्यादिमानस्मि इत्येवंरूपां, मोहेन पूर्वसूत्रोक्ताविद्ययेत्यर्थः। अस्मितां लक्षयित्वा तत्कार्य्यं रागं लक्षयति॥ ६॥

* सुखानुशयी रागः॥ ७॥ *

सुखाभिज्ञस्य सुखानुस्मृतिपूर्वः सुखे तत्साधने वा यो गर्द्धस्तृष्णा लोभः स राग इति॥७॥

सुखानुशयी सुखतत्साधनमात्रविषयको यः क्लेशः स राग इत्यर्थः। मात्रपदादविद्यादिव्यावृत्तिर्जीवन्मुक्तेच्छाव्यक्तिः राग एव न भवति संसाराहेतुत्वादिति न तस्यामतिव्याप्तिः। रागस्य कारणं वदन्निममेवार्थं भाष्यकारोऽप्याह। सुखाभिज्ञस्येति। सुखाभिज्ञस्य वा सुखानुस्मृतिपूर्वको वेत्यर्थः। तेन सुखसाक्षात्कारतः सुखस्मृतितश्च रागो भवतीति रागस्य कारणमुक्तम्। पर्य्यायैः रागशब्दार्थमवधारयति। गर्द्ध इत्यादिना। रागप्रतिघातोत्थतया रागस्य पश्चाद्द्वेषं लक्षयति ॥ ७ ॥

* दुःखानुशयी द्वेषः ॥ ८ ॥ *

दुःखाभिज्ञस्य दुःखानुस्मृतिपूर्वो दुःखे तत्साधने वा यः प्रतिघो मन्युर्जिघांसा क्रोधः स द्वेष इति ॥ ८ ॥

सर्वं पूर्ववत्। प्रतिहन्ति उद्वेजयतीति प्रतिघः। अत्र जिघांसेति वचनाद्द्वेषोऽपीच्छाविशेष एवेत्याशयः। द्वेषमूलकतया द्वेषस्य पश्चादभिनिवेशं लक्षयति ॥ ८ ॥

* स्वरसवाही विदुषोऽपि तथारूढ़ोऽभिनिवेशः ॥ ९ ॥ *

सर्वस्य प्राणिन इयमात्माशीर्नित्या भवति मा न भूवं भूयासमिति, न च अननुभूतमरणधर्मकस्यैषा भवति आत्माशीः, एतया च पूर्वजन्मानुभवः प्रतीयते, स च अयमभिनिवेशः क्लेशः स्वरसवाही कृमेरपि जातमात्रस्य प्रत्यक्षा-

नुमानागमैरसम्भावितो मरणत्रास उच्छेददृष्ट्यात्मकः पूर्वजन्मानुभूतं मरणदुःखमनुमापयति । यथा च अयमत्यन्तमूढेषु दृश्यते क्लेशस्तथा विदुषोऽपि विज्ञातपूर्वापरान्तस्य रूढः, कस्मात्, समाना हि तयोः कुशलाकुशलयोः मरणदुःखानुभवादियं वासनेति ॥ ९ ॥

स्वरसेन संस्कारमात्रेण वहतीति स्वरसवाही । अपिशब्दसमुच्चितमविद्वांसं तथेति तच्छब्दः परामृशति । रूढः प्रसिद्धः, तथा च यथा अविद्वज्जनस्य तथा विदुषोऽपि स्वरसवाहित्वहेतुना यः क्लेशोऽस्ति प्रसिद्धः सोऽभिनिवेश इत्यर्थः । अविद्यादयस्तु विदुषि न सन्तीति न तेषु अतिव्याप्तिः । ननु एवं कथं पूर्वोक्तमविद्याव्याप्तत्वमभिनिवेशस्य घटताम् । अविद्यानाशेऽपि अभिनिवेशसत्त्वादिति चेन्न । संस्कारहेतुतावच्छेदकरूपेणैव विपर्य्ययव्याप्तत्वस्य विवक्षितत्वात् संस्कारहेतुत्वं मरणत्रासातिरिक्तभयत्वेनैव फलबलादिति । अयञ्च क्लेशो भयाख्य इति वक्ष्यति भाष्यकारः । अभिनिवेशस्य अत्यन्तदुरन्तत्वप्रतिपादनाय विद्वदपरिहार्य्यत्वमुखेन लक्षणं कृतं भयसामान्यमेव तु अभिनिवेशो रागादिवदिह विवक्षित इति । तत्रादौ भाष्यकारोऽभिनिवेशस्य स्वरूपमाह । सर्वस्येति । सर्वस्य विदुषोऽविदुषश्चेयमात्मनि आशीः प्रार्थना इच्छाविशेषः सदैव भवति । तामेवाह । मा न भूवम् इति । मा अहमभावो भूवं भूयासं जीव्यासमित्येवंरूपेत्यर्थः । इयमाशीरेव त्रासो भयमित्युच्यत इति भावः । विदुषोऽपि अपरिहार्य्यत्वमुपपादयितुं यथोक्तमभिनिवेशस्य कारणमवधारयति । न चेति । अननुभूतो मरणस्य धर्मो दुःखाति-

शयो येन तस्येयमाशीर्न सम्भवति। धनादिनाशजन्यदुःखज्ञस्यैव धनादिषु तादृशाशीर्दर्शनात्। धनं मे मा नश्यतु सदैव भूयादिति। अतएव तयाशिषा पूर्वजन्मनि मरणदुःखानुभवस्तत्कारणतया प्रतीयते अनुमीयत इत्यर्थः। एतेन जीवस्यानादित्वमपि प्रसङ्गात्साधितं, जन्म तु कूटस्थचिन्मात्रस्य तैस्तैर्देहेन्द्रियबुद्धिवेदनादिभिराद्यः सम्बन्ध इति। यत्तु न जायते न म्रियत इत्यादिवाक्यं तदात्मन उत्पत्तिविनाशौ एतद्देहादेरिव प्रतिषेधतीति बोध्यम्। ननु इह जन्मनि एवानुमानादिना मरणदुःखानुभवेनाभिनिवेशाख्यं भयं भवतु किमर्थं पूर्वजन्मानुभवः कल्प्यत इत्याशङ्कामपाकरोति। स चायमिति। स चायमुक्ताशीरूपोऽभिनिवेशः स्वरसवाही स्वाभाविकोऽत्यन्तमूढस्य क्रमेरपि मरणदुःखप्रत्यक्षादिभिरसम्भाव्यो मरणत्रास उच्छेददृष्ट्यात्मक उच्छेददृष्टिकार्य्यः पूर्वजन्मानुभूतं मरणदुःखमनुमापयति। पूर्वजन्मनि मरणदुःखानुभवमनुमापयति। यदनुभवोत्थेन मरणत्रासेन जनितया वासनयेह जन्मनि मरणत्रासो भवतीति शेषः। मरणभयस्य द्वेषरूपस्यापि संस्कारजनकत्वं निरोधस्येव अगत्या कल्प्यत इति। अभिनिवेशं तत्कारणञ्च व्याख्याय सूत्रवाक्यार्थं व्याचष्टे। यथा चेत्यादिना रूढ़ इत्यन्तेन। विज्ञातेति। विज्ञातः सम्प्रज्ञातयोगेन साक्षात्कृतः प्रपञ्चस्य पूर्वान्तोऽपरान्तश्चाद्यन्तौ येन स तथा तत्त्वज्ञस्येत्यर्थः। कुशलाकुशलयोरिति वक्ष्यमाणत्वात् इति। एतेन आद्यन्तयोरवशिष्यमाणमेव वस्तु प्रपञ्चस्य तत्त्वं तच्च परं ब्रह्म विकारस्तु मध्ये वाचारम्भणमात्रमित्यस्माकमपि सिद्धान्त इति सिद्धम्। तथा चोक्तं मोक्षधर्मेऽपि।

अन्तेषु रेमिरे धीरा न ते मध्येषु रेमिरे।
अन्तप्राप्तिं सुखामाहुर्दुःखमन्तरमेतयोः॥

इति । सुखामाहुरित्यार्षम् । सुखायाहुरिति पाठस्तु साधुः । ननु तत्त्वज्ञस्य अविद्यास्मितादयभावात् कथं यथोक्ताशीरित्याशयेनाशङ्कते । कस्मादिति । संस्कारमात्रजन्यत्वेन परिहरति । समाना हीति । इयं वासना एतदाशीर्हेतुवासनेत्यर्थः । इयञ्च बलवत्तरा वासना चित्तेन सह नश्यत एव ज्ञानेन च दह्यत इत्येतत् अविद्यादिसंस्कारेभ्यो विशेषः । ननु कुशलस्यात्मनित्यत्वनिश्चयात् कथं मा न भूवं भूयासमितीच्छा स्यात् सिद्धत्वज्ञानस्य प्रतिबन्धकत्वादिति चेन्न । विशेषदर्शने सत्यपि ईदृगिच्छादृष्ट्या फलबलेन तादृशसंस्कारस्य उत्तेजकत्वात् । एतेन यदाधुनिकवेदान्तिब्रुवा आहुरात्मा सुखस्वरूपः निरुपाधियथोक्तेच्छाविषयत्वात् वाह्यसुखवदित्यनुमानेनात्मनः सुखरूपता सिध्यतीति, तदप्यपास्तम् । पूर्वपूर्वजन्मसु यस्त्वासो जातस्तेन तदा जातायास्तद्वासनातो निरुपाधीच्छासम्भवात् । अन्यथापि आत्मत्वेनैव प्रियत्वकल्पनौचित्याच्चेति । क्रियायोगः क्लेशतनूकरणार्थ इत्युक्तं तत्र क्लेशतनूकरणस्य फलं वक्तुमाह ॥ ९ ॥

* ते प्रतिप्रसवहेयाः सूक्ष्माः ॥ १० ॥

**ते पञ्च क्लेशा दग्धबीजकल्पा योगिनश्चरिताधिकारे चेतसि प्रलीने सह तेनैव अस्तं गच्छन्ति ॥ २० ॥**

**स्थितानान्तु बीजभावोपगतानां—**

प्रसवाद्विरुद्धः प्रतिप्रसवः प्रलयः । तथा च प्रतिप्रसवेन चित्तस्य प्रलयेन सूक्ष्मा दग्धबीजभावाः क्लेशा हेया इत्यर्थः । तदेव भाष्यकार आह । ते पञ्चेति । पञ्चमध्ये अभिनिवेशो मरणातिरिक्त एव योगिनो दग्धबीजकल्पो भवतीत्युक्तमेव । ननु

तनूकरणं दग्धबीजभावः प्रलयश्चेत्येव क्रमः। अतो दग्धबीजभावप्रतिपादकमुत्तरसूत्रमेवादौ उचितमिति चेन्न। मुख्यफलतया प्रलयस्य अत्रादौ निर्वचनात् तत्र द्वाराकाङ्क्षया च दग्धबीजभावस्य पश्चाद्वक्ष्यमाणत्वादिति। ननु क्लेशतद्वासनयोर्वक्ष्यमाणप्रसंख्यानेनैव नाशोऽस्तु किमर्थं तत्र चित्तनाशोऽपेक्ष्यत इति चेन्न। ज्ञानदग्धैस्तथा क्लेशैरित्यादिशास्त्रप्रामाण्येन ज्ञानाग्निदाहस्यैव सिद्धेर्न तु तन्नाशस्य। युक्तिश्च अत्र प्रागेवोक्ता कारणेषु कार्य्यशक्तेर्यावद्द्रव्यभावित्वदर्शनमिति। तथा च योगाग्निना व्युत्थानसंस्कारदाहवज्ज्ञानाग्निनापि क्लेशसंस्कारयोर्दाह एव भवति न तु तन्नाशः। ननु एवमपि क्लेशसंस्कारदाहेनैव संसारात्यन्तोच्छेदसम्भवे संस्कारसहितचित्तनाशः किमिति मोक्षाय अपेक्ष्यत इति चेन्नैवम्। योगिसङ्कल्पेन दृष्टबीजादिवत् दग्धबीजशक्तिकादपि कदाचित् पुनरङ्कुरोत्पत्त्यापत्तेरिति। तनूकरणस्य द्वारं दग्धबीजभावं प्रतिपादयन् सूत्रं पूरयित्वा पठति। स्थितानामिति। तद्वृत्तय इति। समासान्तर्गततच्छब्दस्यार्थैः क्लेशैः सहान्वयः। स्थितानामित्यस्य विवरणं बीजभावोपगतानामिति। एतच्च सूत्रेण सह व्याख्यास्यामः॥१०॥

* ध्यानहेयास्तद्वृत्तयः ॥ ११ ॥ *

क्लेशानां या वृत्तयः स्थूलास्ताः क्रियायोगेन तनूकृताः सत्यः प्रसङ्ख्यानेन हातव्या, यावत् सूक्ष्मीकृता यावद् दग्धबीजकल्पा इति।

यथा च वस्त्राणां स्थूलो मलः पूर्वं निर्धूयते पश्चात् सूक्ष्मो यत्नेनोपायेन च अपनीयते, तथा

**स्वल्पप्रतिपक्षाः स्थूला वृत्तयः क्लेशानां, सूक्ष्मास्तु महाप्रतिपक्षेति ॥ ११ ॥**

क्लेशानामिति । स्थितानां वीजभावोपगतानां क्लेशानां या वृत्तयः स्थूला अभिव्यक्तावस्थाः ताः प्रथमं क्रियायोगेन अल्पीकृताः सत्यः प्रसंख्यानेन समाधिजप्रज्ञारूपेण ध्यानेन ध्यानकार्य्येण हातव्याः प्रतिबद्धोत्पत्तिकाः कर्त्तव्याः यावत्सूक्ष्मीकृताः, अस्यैव विवरणं यावद्दग्धवीजकल्पा भवन्तीत्यर्थः । एतच्च ते प्रतिप्रसवहेया इति पूर्वसूत्रेणैवोक्तमिति । तनूकरणादिषु त्रिषु सुकरत्वदुष्करत्वरूपं विशेषं दृष्टान्तेनाह । यथा वस्त्राणामिति । निर्धूयते वाताहत्या निराक्रियते । यत्नेन पाषाणप्रहारादिना, उपायेन क्षारसंयोगादिना । अत्रेदं दृष्टान्ते साधनत्रयं दार्ष्टान्तिकेऽपि साधनत्रित्वाभिप्रायेणोक्तम् । स्वल्पेति । स्वल्पः क्रियायोगः प्रतिपक्षस्तनुता हेतुर्यासां स्थूलानामतनूकृतानां ताः तथा महानतिदुष्करः प्रसंख्यानाग्निरसम्प्रज्ञातयोगसाध्यचित्तनाशश्च प्रतिपक्षौ दाहकनाशकौ यासामिति महाप्रतिपक्षा इत्यर्थः । अनेन सूत्रेण जीवन्मुक्तानां वृत्तिरूपोऽपि अविद्यालेशस्तिष्ठति इत्यभ्युपगम आधुनिकानां वेदान्तिब्रुवाणामपसिद्धान्त इति निर्णयम् । तथा सति स्थूलानामपि प्रतिप्रसवहेयत्वापत्तेरिति । इदानीं क्लेशाः किमर्थं हेया इत्याकाङ्क्षायां क्लेशानां परम्परया दुःखनिदानत्वं सूत्रत्रयेण वक्तव्यं, तत्रादौ क्लेशानां दुःखोत्पादने साक्षाद्द्वारमाह ॥ ११ ॥

*** क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः ॥ १२ ॥**

**तत्र पुण्यापुण्यकर्माशयः कामलोभमोहक्रो-**

धप्रसवः। स दृष्टजन्मवेदनीयश्चादृष्टजन्मवेदनीयश्च, तत्र तीव्रसंवेगेन मन्त्रतपःसमाधिभिर्निर्वर्त्तित ईश्वरदेवतामहर्षिमहानुभावानामाराधनाद्वा यः परिनिष्पन्नः स सद्यः परिपच्यते पुण्यकर्माशय इति। तथा तीव्रक्लेशेन भीतव्याधितकृपणेषु विश्वासोपगतेषु वा महानुभावेषु वा तपस्विषु कृतः पुनः पुनरपकारः स चापि पापकर्माशयः सद्य एव परिपच्यते। यथा नन्दीश्वरः कुमारो मनुष्यपरिणामं हित्वा देवत्वेन परिणतः, तथा नहुषोऽपि देवानामिन्द्रः स्वकं परिणामं हित्वा तिर्य्यक्त्वेन परिणत इति। तत्र नारकाणां नास्ति दृष्टजन्मवेदनीयः कर्माशयः, क्षीणक्लेशानामपि नास्ति अदृष्टजन्मवेदनीयः कर्माशय इति ॥ १२ ॥

दृष्टादृष्टजन्मनी वर्त्तमानभविष्यती वेदनं भोगः कर्माशयो धर्माधर्मौ तौ च दृष्टजन्मभोग्यौ वा अदृष्टजन्मभोग्यौ वा उभयथैव क्लेशमूलकौ। क्लेशे सत्येव भवत इत्यर्थः। 'यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते। हत्वापि स इमान् लोकान् न हन्ति न निबध्यते' इत्यादिवाक्यशतेभ्य इति भावः। यथा वा अधिकारिविशेषतया क्लेशानां धर्मादिजनकत्वं शौचादिवत् एवं तज्जनककर्मादिषु रागादिरूपैः प्रवर्त्तनादपोत्यपि बोध्यम्। क्लेशमूलकत्वं विवृणोति। तत्रेति। तत्र चित्ते लोभादिरूपदोष-

त्रयसत्त्वे एव पुण्यपापरूपौ कर्माशयौ भवत इत्यर्थः । रागद्वेष-मोहाख्यानाञ्च दोषाणामदृष्टनियामकत्वं कौर्मे दर्शितम् । 'राग-द्वेषादयो दोषाः सर्वे भ्रान्तिनिबन्धनाः । कार्य्यो ह्यस्य भवेद्दोषः पुण्यापुण्यमिति श्रुतिः । तद्वशादेव सर्वेषां सर्वदेहसमुद्भव' इति । दृष्टजन्मवेदनीयमुदाहरति । तत्र तीव्रेति । सद्य इति । इह जन्मनीत्यर्थः । परिपच्यते कालेन परमेश्वरेण वा फलोपहितीक्रियते । अदृष्टजन्मवेदनीयं पुण्यमुदाहृत्य दृष्टजन्मवेदनीयं पापमुदाहरति । तथेति । य इत्यनुषज्यते । यथाक्रममुक्तयोः पुण्यपापयोर्दृष्टान्तावाह । यथा नन्दीश्वर इति । अदृष्टजन्मवेदनीयञ्च कर्म प्रसिद्धत्वान्नोदाहृतम् । प्रसङ्गतो व्यतिरेकावपि उदाहरति । तत्र नारकाणामिति । नारकिपुरुषाणां धर्माद्यनुत्पत्तेः । ननु स्वर्गिणामपि कर्म नोत्पद्यत इति कथं नारकिवचनमात्रमिति चेन्न । स्वर्गिणां भारतवर्षमागत्य लीला-मानुषविग्रहेण प्रयागादौ कर्मानुष्ठानस्य तत्फलस्य च श्रवणादिति । शेषं सुगमम् । न केवलं कर्माशयेषु एव क्लेशः कारणमपि तु तत्फलेषु अपि, अतस्तान्यपि दुःखोत्पादने क्लेशानां साक्षात् परम्परया द्वाराणीत्याह ॥ १२ ॥

* सति मूले तद्विपाको जात्यायुर्भोगाः॥१३॥ *

सत्सु क्लेशेषु कर्माशयो विपाकारम्भी भवति, न उच्छिन्नक्लेशमूलः । यथा तुषावनद्धाः शालितण्डुला अदग्धबीजभावाः प्ररोहसमर्था भवन्ति न अपनीततुषा दग्धबीजभावा वा, तथा क्लेशावनद्धः कर्माशयो विपाकप्ररोही भवति न अपनीतक्लेशो न प्रसङ्ख्यानदग्धक्लेशबीजभावो वेति ।

स च विपाकस्त्रिविधो जातिरायुर्भोग इति। तत्रेदं विचार्य्यते, किमेकं कर्म एकस्य जन्मनः कारणम्, अथैकं कर्म अनेकं जन्म आक्षिपतीति, द्वितीया विचारणा, किमनेकं कर्म अनेकं जन्म निर्वर्त्तयति, अथ अनेकं कर्म एकं जन्म निर्वर्त्तयतीति। न तावदेकं कर्म एकस्य जन्मनः कारणं, कस्माद्, अनादिकालप्रचितस्य असङ्ख्येयस्य अवशिष्टकर्मणः साम्प्रतिकस्य च फलक्रमानियमादनाश्वासो लोकस्य प्रसक्तः स च अनिष्ट इति। न चैकं कर्म अनेकस्य जन्मनः कारणं, कस्माद्, अनेकेषु कर्मसु एकैकमेव कर्म अनेकस्य जन्मनः कारणमिति अवशिष्टस्य विपाककालाभावः प्रसक्तः, स च अपि अनिष्ट इति। न च अनेकं कर्म अनेकस्य जन्मनः कारणं, कस्मात्, तदनेकं जन्म युगपत् न सम्भवतीति क्रमेण वाच्यं, तथा च पूर्वदोषानुषङ्गः, तस्माज्जन्मप्रायणान्तरे कृतः पुण्यापुण्यकर्माशयप्रचयो विचित्रः प्रधानोपसर्ज्जनभावेन अवस्थितः प्रायेणाभिव्यक्त एकप्रघट्टकेन मिलित्वा मरणं प्रसाध्य सम्मूर्च्छित एकमेव जन्म करोति, तच्च

जन्म तेनैव कर्मणा लब्धायुष्कं भवति, तस्मिन्ना-
युषि तेनैव कर्मणा भोगः सम्पद्यत इति, असौ
कर्माशयो जन्मायुर्भोगहेतुत्वात् त्रिविपाकोऽभि-
धीयत इति, अत एकभविकः कर्म्माशय उक्त
इति।

दृष्टजन्मवेदनीयस्तु एकविपाकारम्भी भोग-
हेतुत्वाद्, द्विविपाकारम्भी वा आयुर्भोगहेतुत्वाद्,
नन्दीश्वरवत् नहुषवद्वा इति। क्लेशकर्म्मविपाका-
नुभवनिमित्ताभिस्तु वासनाभिरनादिकालसम्मू-
र्च्छितमिदं चित्तं चित्रीकृतमिव सर्वतो मत्स्य-
जालं ग्रन्थिभिरिव आततमित्येता अनेकभवपू-
र्विका वासनाः। यस्तु अयं कर्माशय एष एवैक-
भविक उक्त इति। ये संस्काराः स्मृतिहेतवस्ता
वासनास्ताश्च अनादिकालीना इति। यस्तु
असावेकभविकः कर्माशयः स नियतविपाकश्च
अनियतविपाकश्च। तत्र दृष्टजन्मवेदनीयस्य
नियतविपाकस्यैव अयं नियमो न तु अदृष्टजन्म-
वेदनीयस्य अनियतविपाकस्य, कस्माद्, यो
हि अदृष्टजन्मवेदनीयोऽनियतविपाकस्तस्य त्रयी
गतिः, कृतस्य अविपक्वस्य नाशः, प्रधानकर्म्मणि

आवापगमनं वा, नियतविपाकप्रधानकर्मणा अभिभूतस्य वा चिरमवस्थानम् इति। तत्र कृतस्य अविपक्वस्य नाशो यथा शुक्लकर्मोदयादिहैव नाशः कृष्णस्य, यत्रेदमुक्तम्। "द्वे द्वे ह वै कर्मणी वेदितव्ये पापकस्यैको राशिः पुण्यकृतोऽपहन्ति। तदिच्छस्व कर्माणि सुकृतानि कर्त्तुमिहैव ते कर्म्म कवयो वेदयन्ति"। प्रधानकर्म्मणि आवापगमनम् यत्रेदमुक्तं "स्यात् स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्षः, कुशलस्य नापकर्षाय अलं, कस्मात्, कुशलं हि मे बहु अन्यदस्ति यत्रायमावापं गतः स्वर्गेऽपि अपकर्षमल्पं करिष्यति" इति।

नियतविपाकप्रधानकर्म्मणा अभिभूतस्य वा चिरमवस्थानम्, कथमिति, अदृष्टजन्मवेदनीयस्यैव नियतविपाकस्य कर्म्मणः समानं मरणमभिव्यक्तिकारणमुक्तं, न तु अदृष्टजन्मवेदनीयस्य अनियतविपाकस्य, यत्तु अदृष्टजन्मवेदनीयं कर्म्म अनियतविपाकं तन्नश्येद्, आवापं वा गच्छेद्, अभिभूतं वा चिरमपि उपासीत यावत्समानं कर्म्म अभिव्यञ्जकं निमित्तस्य न विपाकाभि-

सुखं करोति इति, तद्विपाकस्यैव देशकालनिमित्तानवधारणादियं कर्म्मगतिर्विचित्रा दुर्विज्ञाना चेति, नच उत्सर्गस्य अपवादान्निवृत्तिरिति एकभविकः कर्माशयोऽनुज्ञायत इति ॥ १३ ॥

क्लेशरूपे कर्माशयस्य मूले सत्येव कर्माशयस्य विपाकः फलं भवति क्लेशाश्च वासनारूपा एव जन्मादिविपाककारणम्। विपाकस्य स्वरूपमाह। जात्यायुर्भोगा इति। जातिर्जन्म आयुर्जीवनकालः भोगः सुखदुःखात्मकशब्दादिवृत्तिरित्यर्थः। न तु सुखादिसाक्षात्कार एवात्र भोगः, ते ह्लादपरितापफला इत्युत्तरसूत्रे तस्य विपाकजन्यतावचनात् इति। स्यादेतत्। क्लेशानां कर्मसहकारित्वे प्रमाणं नास्ति। "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन!" इत्यादिवाक्येभ्यो हि ज्ञानस्य क्लेशक्षयहेतुत्ववत् कर्मक्षयहेतुत्वमपि सिद्धम्। अतः क्लेशाभावकाले कर्माभावस्य आवश्यकत्वात् ततएव विपाकाभावः स्यादिति। अत्रोच्यते। विविधयोनिहेतुशुभाशुभकर्मसु सत्सु यत्र रागादिरन्तकाले उद्‌बुद्धस्तिष्ठति मरणोत्तरं तामेव योनिं जीवः प्राप्नोति न इतरामित्यन्वयव्यतिरेकाभ्यां कर्मवत् रागादिदोषोऽपि विपाकहेतुः। तथा च श्रुतिः "तदेव सक्तः सह कर्मणेति लिङ्गं मनो यत्र निषिक्तमस्ये"ति। "तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चे"ति च। तथा गीतापि। "पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान्। कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु" इति। न्यायसूत्रञ्च। 'वीतरागजन्मादर्शनात्'। नरकादिषु अपि रागाद्यनुसारेणैव विपाको भवति। निषिद्धस्त्र्यादिसक्तानामेव तप्तलोहमयनारीसमालिङ्गनादिफलश्रवणात्, अतः क्लेशोऽपि

स्वातन्त्र्येण विपाकारम्भे हेतुः, ज्ञानोत्तरञ्च आरब्धविपाकः समाप्यत एव न तु आरभ्यत इति न तत्र क्लेशापेक्षेति। अपि च अत्रैव सूत्रे भाष्यकृता कर्माशयस्यापि प्रसंख्यानदग्धबीजभावस्य वक्तव्यतया कर्माशयस्य दाह एव ज्ञानेन क्रियते न तु नाश इत्यवधार्य्यते। स च क्लेशाख्यसहकार्य्युच्छेद एव। ज्ञानस्य हि व्यापारद्वयं क्लेशाख्यहेतूच्छेदेन कर्मानुत्पादः प्राचीनकर्मणां दाहश्च न तु कर्मनाशः प्रारब्धकर्मणोऽपि नाशप्रसङ्गात्। न च प्रारब्धातिरिक्तकर्मत्वेन ज्ञाननाश्यता कल्प्येति वाच्यम्। लाघवेन क्लेशस्यैव विपाकारम्भहेतुत्वकल्पनौचित्यात्। प्रारब्धफलकस्य कर्मणो बीजशक्तिनाशेऽपि फलं समाप्यत एव बीजदाहेऽपि उत्पन्नाङ्कुरवदिति। अतएव 'ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः। योगाग्निदग्धकर्मचयोऽचिरात्' इति गीताविष्णुपुराणयोर्ज्ञानयोगाभ्यां कर्मणो दाह एव श्रूयते न तु नाश इति। तदेकवाक्यतया च क्षीयन्ते चास्य कर्माणीत्यादिवाक्यानि अपि दाहपराणि एव। तथा "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ" इति ब्रह्मसूत्रेऽपि विनाशशब्दो निष्फलतार्थक एव मन्तव्यः। कर्माशयनाशस्तु ज्ञानवासनानाशवत् चित्तनाशादेव भवति धर्मिनाशस्य धर्मनाशहेतुतायाः सामान्यत एव क्लृप्तत्वादिति। तस्मात् ज्ञानेन क्लेशाख्यहेतुदाहात् कर्मानुत्पादवत् प्राचीनकर्मविपाकानारम्भोऽपि भवति क्लेशाख्यदृष्टसहकार्य्यभावात्। अतो ज्ञानात् क्लेशाख्यसहकार्य्युच्छेद एव कर्मदाह इति सर्वं सुस्थम्। तदेतत् सर्वमभिप्रेत्य भाष्यकारः सूत्रमिदं व्याचष्टे। सत्सु क्लेशेषु इति। विपाकारम्भीति। आरम्भशब्दात् जीवन्मुक्तस्य आरब्धविपाकेषु न क्लेशाः कारणमित्युक्तं तस्य हि आरब्ध एव विपाकः कर्मणा समाप्यत इति। एतेन जीवन्मुक्तस्य भोगार्थमविद्यालेशकल्पनमज्ञानामुपेक्षणीयम्। आरब्धविपाके

क्लेशानामहेतुत्वादिति। क्लेशानां कर्माशयसहकारित्वं ज्ञानादग्धकर्माशयस्यैव विपाकारम्भहेतुत्वं च दृष्टान्तेन प्रतिपादयति। यथा तुषेति। क्लेशावनद्ध इति। ज्ञानादग्धवीजभाव इत्यपि बोध्यम्। दृष्टान्तानुसारात् न प्रसंख्यानदग्धवीजभावो वा इत्युक्तवाक्याच्च। न अपनीतक्लेश इति। स्वविपाकगोचरक्लेशशून्य इत्यर्थः। अतो न प्रसंख्यानदग्धवीजभावो वा इत्यस्य क्लेशसामान्याभावकालीनः कर्माशयोऽसङ्कीर्णोदाहरणमिति। जात्यायुर्भोगा इति व्याचष्टे। स च विपाक इति। कर्मणो जन्मकारणत्वे कञ्चन विशेषमवधारयितुमाह। तत्रेदं विचार्य्यत इति। तत्र जन्मलक्षणविपाके, अस्य च विचारस्य प्रयोजनं स्वयमेव वक्ष्यति। तत्र चत्वारो विकल्पाः कर्मैकत्वपक्षं ध्रुवं कृत्वा जन्मैकत्वानेकत्वरूपं प्रथमं विकल्पद्वयं कर्मानेकत्वं च ध्रुवं कृत्वा जन्मानेकत्वैकत्वरूपमपरं विकल्पद्वयमिति। आक्षिपतीति। फलदानार्थमुत्पादयतीत्यर्थः। किमनेकमिति। अनेकं कर्म मिलित्वा अनेकं जन्म करोतीत्यर्थः। आद्यविकल्पे तु न मिलनमुक्तमिति ततो विशेषः। तत्राद्यं विकल्पमपाकरोति। न तावदेकमिति। पृच्छति। कस्मादिति। उत्तरम्। अनादीति। प्रचितस्य सञ्चितस्य अवशिष्टस्य अभुक्तस्य। अविशिष्टस्य इति पाठे अन्योन्यमभुक्तत्वेन अविशिष्टस्येत्यर्थः। साम्प्रतिकस्य ऐहिकस्य, फलक्रमानियमादनाश्वास इति यथोक्तानामनन्तकर्मणां मध्ये किं कर्म प्रथमं फलं दास्यति किं वा पश्चादिति फलक्रमे नियमो नास्ति अतो लोकानां पुण्यानुष्ठाने फलानाश्वासः स्यात्। भाव्यनन्तकालमध्ये भाविपापादिना अनुष्ठीयमानकर्मणो विनाशसम्भवात् झटिति भोगकामनयैव कर्मानुष्ठानाच्चेत्यर्थः। द्वितीयं विकल्पं निराकरोति। न च एकमिति। अनेकजन्मसु किञ्चित् कृत्वा फलदानाय अनेकजन्मनः कारणमेकैकं कर्म

इत्यपि न भवतीत्यर्थः। अत्र हेतुं पृच्छति। कस्मादिति। उत्तरम्, अनेकेषु इति। अनेकेषु जन्मसु क्रियमाणं कर्म एकैकं प्रत्येकमेव अनेकस्य असंख्यजन्मनः कारणम् अतोऽवशिष्टस्य तदितरस्य तद्विरुद्धफलस्य कर्मण इति यावदिति। तृतीयं विकल्पं निराकरोति। न च अनेकं कर्मेति। पृच्छति। कस्मादिति। उत्तरम्, तदनेकमिति। तथा चेति। प्रथमपक्षोक्तदोषस्य अनाश्वासस्य प्रसङ्ग इत्यर्थः। तदेवं पक्षत्रये दूषिते चतुर्थपक्षं सिद्धान्तयति। तस्मादिति। तस्मात् जन्म आरभ्य आमरणपर्य्यन्तकाले विहितनिषिद्धैर्यो धर्माधर्मसमूहो गुणप्रधानभावापन्न उत्पादितः स मरणकाल आरब्धकर्मभोगसमाप्त्या लब्धावसरः सन् एकप्रयत्नेन मिलित्वा स्वफलदानार्थं मरणं प्रसाध्य सम्मूर्च्छितः प्रवृद्धवेग एकमेव जन्म गुणप्रधानभावापन्नः स्वफलयोग्यं करोति न अनेकमित्यर्थः। मरणञ्च लिङ्गदेहस्य स्थूलदेहादुत्क्रमणं न तु नाशो गमनश्रुतेः, नाशस्य भोगाहेतुतया कर्माजन्यत्वस्वाभाविकत्वयोर्भाष्ये वक्ष्यमाणत्वाच्च। ननु केवलजन्मना किं प्रयोजनं तत्राह। तच्च जन्मेति। आयुषोऽपि न स्वतः पुरुषार्थत्वमत आह। तस्मिन् आयुषीति। असाविति। जन्महेतुरित्यर्थः। अन्यो हि देशकमात्रविपाको भवतीति वक्ष्यति। औत्सर्गिकमुपसंहरति। अत इति। एको भवोऽस्मिन् कार्य्यतया अस्तीति एकभविकः कर्माशयसमूहः। पूर्वाचार्य्यैरुक्त इत्यर्थः। ऐकभविक इति पाठे तु एकभविकं कर्म तज्जन्यादृष्टञ्च ऐकभविकमित्यर्थः। ननु एवं स्वर्गिनारकिणां कथं पुनर्जन्मादि स्यात् स्वर्गादिशरीरे धर्माद्यनुत्पत्तेः प्राचीनसर्वकर्मणाञ्च तत्रैव समापनादिति चेत्, न। स्वर्गादिजनककर्मणामेव ब्राह्मणस्थावरादियोनिलाभपर्य्यन्तफलश्रवणात् शास्त्रानुक्तकालविशेषस्यैव फलस्यैकभविकत्वनियमादिति। त्रिविपाकं कर्मोक्त्वा एकद्विविपाके कर्मणी

प्राह । दृष्टजन्मेति । नन्दीश्वरवत् नहुषवच्चेति दृष्टान्तद्वयं पूर्वमुपन्यासक्रमेणोक्तम् अत्र तु व्युत्क्रमेण योजनीयं प्रतिज्ञाक्रमेणोदाहरणौचित्यात् । नन्दीश्वरस्य हि अष्टवर्षायुर्मनुष्यजन्मनः पुण्यविशेषेण आयुर्भोगरूपं विपाकद्वयं देवसम्बन्धि उत्पन्नं च नहुषस्य च इन्द्रत्वसम्पादककर्मणैव दीर्घायुष्ट्वस्य लाभात् पापविशेषेण केवलं सर्पभोगरूप एक एव विपाकोत्पन्न इति । तत्र च नन्दीश्वरनहुषयोर्मनुष्यशरीरस्यैव वार्द्धकादिवद्देवसर्परूपपरिणामान्तरात् न जन्मान्तरमपूर्वदेहानुत्पादादादिति । ननु एवं कर्माशयवज्ज्ञानवासनापि एकभविकी एव स्यात् तथाच तासामनादित्वञ्च आशिषो नित्यत्वादित्यागामिसूत्रे वासनानामनादित्ववचनं नोपपद्येत इत्याशङ्कां परिहरति । क्लेशकर्मेति । क्लेशकर्मणोर्विपाकस्य योऽनुभवश्चित्तवृत्तिनिवहो ज्ञानरूपस्तैर्निष्पादिताभिर्ज्ञानरूपवासनाभिरनादिकालेषु सम्मूर्च्छितमुपचितं पुष्टमिति यावत् । अतएव विविधरूपाभिस्ताभिः पटवत् सर्वतश्चित्रितमिव चित्तं ग्रन्थिभिरायतं मत्स्यजालमिव वर्त्तते इत्यत एता वासना अनेकभवपूर्विकाः स्वीक्रियन्ते अन्यथा मनुष्ययोन्यनन्तरं देवतिर्य्यग्योनिभोगानुपपत्तेः मनुष्यजन्मनि तद्वासनानुपपत्तेः । एकभववासानानाञ्च मनुष्यजन्मनैव क्षयादित्यर्थः । अत्र वासनानां जीवमत्स्यबन्धकचित्तजालग्रन्थितत्वेन रूपणात् । 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः' इत्यादिश्रुतावपि हृदयग्रन्थिर्वासनैव न तु आधुनिककल्पिताहङ्कारादिरिति सिद्धम् । कर्माशयाख्याद्धर्माधर्मरूपात् संस्काराद्वासनानां वैलक्षण्यमाह । ये संस्कारा इति । ताश्च अनादिकालीना इत्युपसंहारः । औत्सर्गिकमेकभविकत्वं क्वचिदपवदितुं भूमिकां रचयति । यस्तु असाविति । नियतः स्वाभाविको विघ्नशून्यः तादृशो विपाको यस्य स तथा । स च अबन्ध्योऽनन्यशेषः कर्मान्त-

रानभिभूतस्य कर्माशयस्तद्विपरीतस्य अनियतविपाक इत्यर्थः। अयञ्च अर्थोऽनियतविपाकत्रैविध्यभाष्ये व्यक्तीभविष्यति। तत्र अदृष्टजन्मवेदनीयस्य नियतविपाकस्यैवायं नियम इति। एक-भविकत्वनियम इत्यर्थः। न तु अदृष्टजन्मवेदनीयस्य अनियत-विपाकस्य चेति, सुगमम्। दृष्टजन्मवेदनीयस्य भवाहेतुत्वेन एक-भविकत्वाभावः स्पष्ट एव इत्यतोऽनियतविपाकस्यैव एकभविक-त्वनियमाभावे हेतुं पृच्छति। कस्मादिति। उत्तरं, यो हि अदृ-ष्टेति। दृष्टजन्मवेदनीयस्य एकभविकत्वशङ्का नास्तीत्याशयेन एवाह। अदृष्टजन्मवेदनीय इति। स्वरूपाख्यानमात्रं न तु दृष्ट-जन्मवेदनीयस्य अनियतविपाकत्वं नास्तीत्यादिः कश्चिदाशयः सम्भवति प्रयोजनाभावात्। यो हि अदृष्टजन्मवेदनयोग्यो नियतविपाकभिन्नः स त्रिविध इत्यर्थः। यथाश्रुते वक्ष्यमाणस्य अविपक्वनष्टस्य संग्रहानुपपत्तेः। तिसृषु एकां गतिमाह। कृत-स्येति। अपरिपक्वस्य अदत्तफलकस्य विनाश इत्यर्थः। तथा च तस्य नास्ति एकभविकत्वमित्याशयः। द्वितीयामाह। प्रधानेति। प्रधानकर्मणा यागादिना सहैव तदङ्गानां पशुहिंसादीनां स्वफल-दानाय च फलप्राप्तिः प्रधानकर्मणि आवापगमनं, यथा धान्य-वीजैः सहोत्पन्नानां तृणवीजानां तैः सहैव कुसूलमध्यस्थापि-तानां धान्यवीजेन सहैव वपनप्राप्तिः न स्वातन्त्र्येण तद्वत् परो-पसर्जनतया अनुष्ठितत्वात् न स्वातन्त्र्येण फलदानमिति। तथा च प्रधानकर्मातिशयस्य यदा बलवत्तरकर्मान्तरेणाभिभवस्तदा तदुपसर्जनस्यापि नैकभविकत्वमित्याशयः। तृतीयां गतिमाह। नियतविपाकेति। तत्र प्रधानं नाङ्गि किन्तु बलवत्तरम्। निय-तविपाकेन प्रधानकर्मणा स्वविरुद्धफलदेनाभिभूतस्य प्रतिबद्धस्य चिरमवस्थानं द्वित्रिचतुरादिजन्मसु प्रसुप्ततया अवस्थानमित्यर्थः। तथाच तस्य नैकभविकत्वमित्याशयः। एतासु आद्यामुदाहरति।

तत्र कृतस्येति । शुक्लः कर्माशयः धर्मः कृष्णश्च अधर्मः तयोराद्येन उत्तरस्य नाशे श्रुतिमुदाहरति । यत्रेदमिति । पुण्यपापरूपे द्वे कर्मणी पुरुषैर्वेदितव्ये अवधारयितव्ये । द्वे द्वे इति वीप्सा पुरुषभेदात् कर्मभेदमभिप्रेत्योक्ता । यतः पुण्यकृतः पुण्यनिर्मित एको मुख्यो राशिः समूहस्य समूहिकार्य्यत्वात् पापकस्य पापराशेरपहन्ति चोरस्य निहन्तीतिवत् कर्मणि षष्ठी । तस्मात् सुकृतानि कर्माणि कर्त्तुमिच्छस्व तच्च कर्म इह लोके एव ते तुभ्यं कवयो वेदयन्ते प्रतिपादयन्ते न तु लोकान्तरे इति श्रुत्यर्थः । इच्छस्व इति छान्दसत्वात् आत्मनेपदम् । द्वितीयां गतिमुदाहरति । प्रधानेति । यत्र यस्मिन् विषये पञ्चशिखाचार्य्येणेदं वक्ष्यमाणमुक्तं तदेव प्रधानकर्मणि आवापगमनमित्यन्वयः । स्यात् स्वल्प इत्यादिवाक्यस्यायमर्थः । हिंसादिजन्यपापेन यागाद्यपूर्वस्य स्वल्प एव सङ्करः स्यात् सोऽपि सपरिहारः स्वल्पेनैव प्रायश्चित्तेन परिहर्त्तुं शक्यते यदि च प्रमादतः प्रायश्चित्तं न क्रियते सप्रत्यवमर्षः । बहुसुखमध्ये अन्यद्दुःखं मर्षणयोग्यं भोजननान्तरीयकदुःखवत् । अतः कुशलस्य कर्मणोऽपकर्षाय हेयत्वाय नालं न पर्य्याप्तम् । सङ्कर इति । शेषं करिष्यतीत्यन्तं पञ्चशिखवाक्यं सुगमम् । तृतीयां गतिमुदाहरति । नियतेति । उत्कटत्वरूपं बलवत्त्वमेव प्रधानत्वम् । ननु एवं कर्मविशेषस्य चिरमवस्थाने सति पूर्वोक्तसर्वकर्मणामेकदैव प्रायणादभिव्यक्तिः कथमुपपद्यत इत्याशयेन शङ्कते । कथमिति । सिद्धान्तमाह । अदृष्टेति । कर्मणः कर्मसामान्यस्य समानमेकम् । न तु अदृष्टेति । अदृष्टजन्मवेदनीयस्येति प्रसङ्गादुक्तम् । अत्र अनियतविपाकस्य वेति वाशब्दः क्वचित्तिष्ठति स वाशब्दोऽप्यर्थः । गतित्रयमुपसंहरति । यत्तु इति । उपासीत प्रतीक्षेत विपाकं विपाकारम्भकं वा विरुद्धकर्मान्तरमिति शेषः । उपासनस्य अवधि-

माह। यावदिति। अस्य समानमविरुद्धं कर्माभिव्यक्तौ निमित्तं यावन्नैतत्फलोन्मुखीकरोतीत्यर्थः। 'यद्‌यज्जन्मकृतं पापं मया सप्तसु जन्मसु। तन्मे रोगञ्च शोकञ्च मा करोत्विह जन्मनि' इत्यादिवाक्यानि। तथा कर्मगतदुर्विज्ञानत्ववचनानि च एतादृशकर्मविषयाणि एवेत्याह। तद्विपाकस्येति। अभिभूतकर्मविपाकस्यैव कुत्र कदा केन निमित्तविशेषेण भविष्यतीति अवधारयितुमशक्यत्वादियमभिभूतकर्मगतिश्चित्रा अद्भुतरूपा दुर्विज्ञाना च इत्यर्थः। ननु एवमेकभविकत्वं क्षतमित्याशङ्क्याह। नच उत्सर्गस्येति। निवृत्तिः क्षतिरित्यर्थः। क्वचिदपवादेऽपि एकभविकत्वमौत्सर्गिकमेव अनुमन्यतेऽस्माभिरित्यर्थः। नच एवमपि अपवादाशङ्कया अनाश्वासतादवस्थ्यम्। अपवादस्य स्वानुष्ठानमान्द्यनिमित्तकतया तत् हित्वैव शक्यपरिहारत्वादिति। यच्च आधुनिकवेदान्तिभिरेकभविकमतं व्यभिचारेण दूषितं तदज्ञानादेव औत्सर्गिकतामात्रस्य भाष्यकृतोक्तत्वादिति सर्वं सुस्थम्। इदानीमुक्ताभ्यां कर्मतद्विपाकाभ्यां क्लेशानां मुख्यफलमाह ॥१३॥

* ते ह्लादपरितापफलाः पुण्याः पुण्यापुण्यहेतुत्वात् ॥ १४ ॥ *

ते जन्मायुर्भोगाः, पुण्यहेतुकाः सुखफलाः, अपुण्यहेतुका दुःखफला इति। यथा चेदं दुःखं प्रतिकूलात्मकमेवं विषयसुखकालेऽपि दुःखमस्ति एव प्रतिकूलात्मकं योगिनः ॥ १४ ॥

कथं तदुपपाद्यते।

ते विपाकाः सर्वं एव समुचितसुखदुःखफलकाः समुचितपुण्यपापहेतुकत्वादित्यर्थः। अत्र सुखावच्छेदेन पुण्यहेतुका

दुःखावच्छेदेन पापहेतुका इति । विभज्य प्रतिपादयति । ते जन्मायुरित्यादिना । सुखदुःखयोश्च फलत्वं भोग्यतयेति प्रागेव व्याख्यातं विपाकान्तरगतभोगश्च शब्दाद्याकारवृत्तिरेवेति तस्यापि सुखदुःखहेतुत्वमुपपन्नम् । तदेवमनेकसूत्रैः प्रोक्तमविद्याया दुःखनिदानत्वं न्यायाचार्य्यैरेकसूत्रेणैव अर्थादुक्तं, "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग" इति । कारणनाशादेव हि कार्य्यानुत्पाद इति । तदेवं दुःखनिदानतया क्लेशानां हेयत्वमुक्तम् । ननु सर्वे विपाकाः कथं सुखदुःखफलकाः ब्रह्मलोकादौ दुःखासम्भिन्नसुखसत्त्वादित्याशङ्कां परिहरति । यथा च इदमिति । यथा च इदं परिदृश्यमानं रोगादिदुःखं प्रतिकूलात्मकद्वेषस्वभावं भवति एवं सर्वत्रैव विषयसुखकालेऽपि दुःखं योगिनां प्रतिकूलात्मकं तिष्ठतीत्यर्थः । दुःखतत्साधनयोरेकरूपेण ग्रहणाय प्रतिकूलात्मकमित्युक्तम् । मूढानां दुःखसमुद्रमग्नानां सुखनान्तरीयकसूक्ष्मदुःखेषु दृष्टिर्नास्तीति योगिन इत्युक्तम् । तथा च लौकिकदुःखमिव विषयसुखमपि दुःखशवलतया दुःखत्वेन हेयमेवेति भावः । यद्यपि स्वर्गादौ सुखमधिकं तथापि अल्पमपि दुःखं बलवद्द्वेषविषयो भवति । बलवत्त्वं च सुखाभिलाषाभिभावकत्वम् । तथा च सांख्यसूत्रम् । यथा दुःखाद् द्वेषः पुरुषस्य न तथा सुखादभिलाष इति । अस्मिन् सूत्रे सुखदुःखयोरेव कर्मविपाकफलत्ववचनात् जीवन्मुक्तानामपि प्रारब्धविपाकेषु सुखदुःखे शारीरे भवत एव आभिमानिके तु न भवतः तत्कारणक्लेशाभावादिति सिद्धान्तः । तथा च श्रुतिः । 'न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति' इति । 'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेदि'ति च । स्मृतिश्च 'वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यत' इति । सूत्रान्तरमव-

तारयितुं सुखस्यापि ज्ञानिदृष्ट्या दुःखत्वे हेतुं पृच्छति। कथमिति। तदुपपादकतयोत्तरसूत्रमवतारयति। तदुपपाद्यत इति॥ १४॥

* परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः॥ १५॥ *

सर्वस्यायं रागानुविद्धश्चेतनाचेतनसाधनाधीनः सुखानुभव, इति तत्रास्ति रागजः कर्म्माशयः, तथा च द्वेष्टि दुःखसाधनानि मुह्यति चेति द्वेषमोहकृतोऽप्यस्ति कर्म्माशयः। तथा च उक्तम्। न अनुपहत्य भूतान्युपभोगः सम्भवतीति हिंसाकृतोऽप्यस्ति शारीरः कर्म्माशय इति, विषयसुखञ्च अविद्येत्युक्तम्। या भोगेषु इन्द्रियाणां तृप्तेरुपशान्तिस्तत् सुखं, या लौल्यादनुपशान्तिस्तद्दुःखम्। न च इन्द्रियाणां भोगाभ्यासेन वैतृष्ण्यं कर्त्तुं शक्यं, कस्माद्, यतो भोगाभ्यासमनुविवर्द्धन्ते रागाः, कौशलानि च इन्द्रियाणामिति, तस्मादनुपायः सुखस्य भोगाभ्यास इति, स खलु अयं वृश्चिकविषभीत इव आशीविषेण दष्टो यः सुखार्थी विषयानुवासितो महति दुःखपङ्के निमग्न इति। एषा परिणामदुःखता नाम प्रतिकूला सुखावस्थायामपि योगिनमेव क्लि-

म्नाति । अथ का तापदुःखता । सर्वस्य द्वेषानुविद्धश्चेतनाचेतनसाधनाधीनस्तापानुभव, इति तत्रास्ति द्वेषजः कर्म्माशयः, सुखसाधनानि च प्रार्थयमानः कायेन वाचा मनसा च परिस्पन्दते ततः परमनुगृह्लाति उपहन्ति च, इति परानुग्रहपीड़ाभ्यां धर्म्माधर्म्मौ उपचिनोति, स कर्म्माशयो लोभात् मोहाच्च भवति, इत्येषा तापदुःखता उच्यते । का पुनः संस्कारदुःखता । सुखानुभवात् सुखसंस्काराशयो, दुःखानुभवादपि दुःखसंस्काराशय इति, एवं कर्म्मभ्यो विपाकेऽनुभूयमाने सुखे दुःखे वा पुनः कर्म्माशयप्रचय इति । एवमिदमनादि दुःखस्रोतो विप्रसृतं योगिनमेव प्रतिकूलात्मकत्वात् उद्वेजयति, कस्माद्, अक्षिपात्रकल्पो हि विद्वानिति, यथा ऊर्णातन्तुः अक्षिपात्रे न्यस्तः स्पर्शेन दुःखयति नान्येषु गात्रावयवेषु, एवमेतानि दुःखानि अक्षिपात्रकल्पं योगिनमेव क्लिश्नन्ति नेतरं प्रतिपत्तारम् । इतरन्तु स्वकर्म्मोपहृतं दुःखमुपात्तम् उपात्तम् त्यजन्तम् त्यक्तं त्यक्तमुपाददानमनादिवासनाविचित्रया चित्तवृत्त्या समन्ततोऽनुविद्ध-

मिव अविद्यया हातव्य एव अहङ्कारममकारानुपातिनं जातं जातं वाह्याध्यात्मिकोभयनिमित्तास्त्रिपर्वाणस्तापा अनुप्लवन्ते। तदेवमनादिदुःखस्रोतसा व्युह्यमानमात्मानं भूतग्रामञ्च दृष्ट्वा योगी सर्वदुःखक्षयकारिणं सम्यग्दर्शनं शरणं प्रपद्यत इति। "गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः" प्रख्याप्रवृत्तिस्थितिरूपा बुद्धिगुणाः परस्परानुग्रहतन्त्रीभूत्वा शान्तं घोरं मूढं वा प्रत्ययं त्रिगुणमेव आरभन्ते, चलञ्च गुणवृत्तमिति क्षिप्रपरिणामि चित्तमुक्तम्। रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुध्यन्ते, सामान्यानि तु अतिशयैः सह प्रवर्त्तन्ते, एवमेते गुणा इतरेतराश्रयेणोपार्जितसुखदुःखमोहप्रत्यया इति सर्वे सर्वरूपा भवन्ति, गुणप्रधानभावकृतस्तु एषां विशेष इति, तस्माद् दुःखमेव सर्वं विवेकिन इति। तदस्य महतो दुःखसमुदायस्य प्रभववीजमविद्या, तस्याश्च सम्यग्दर्शनमभावहेतुः, यथा चिकित्साशास्त्रं चतुर्व्यूहं, रोगः, रोगहेतुः, आरोग्यम्, भैषज्यम्, इति, एवमिदमपि शास्त्रं चतुर्व्यूहमेव, तद्यथा, संसारः, संसारहेतुः, मोक्षः,

मोक्षोपायः, इति। तत्र दुःखबहुलः संसारो हेयः, प्रधानपुरुषयोः संयोगो हेयहेतुः, संयोगस्य आत्यन्तिकी निवृत्तिर्हानं, हानोपायः सम्यग्दर्शनं, तत्र हातुः स्वरूपमुपादेयं हेयं वा न भवितुमर्हति इति, हाने तस्य उच्छेदवादप्रसङ्गः उपादाने च हेतुवादः, उभयप्रत्याख्याने च शाश्वतवाद इत्येतत् सम्यग्दर्शनम् ॥ १५ ॥

तदेतच्छास्त्रं चतुर्व्यूहमित्यभिधीयते।

परिणामश्च तापश्च संस्कारश्च तज्जानि दुःखानि तैः सम्बन्धात् तत्कारणत्वादिति यावत्। तथा गुणवृत्त्यविरोधाच्च अर्थतो दुःखसम्भिन्नत्वाच्च प्रकृतितत्कार्य्यसुखादिकं सर्वं दुःखमेव विवेकिनः। सुखदुःखतत्त्वसाक्षात्कारिणो मतमिति वाक्यार्थः। प्रतिपदञ्च व्याख्या भाष्ये भविष्यति एवकारेण च अनुकूलात्मकसुखरूपता व्यवच्छिन्ना। यद्यपि अयोगिनोऽपि दुःखमेव सर्वं तथापि स मूढ़त्वात् सुखकाले दुःखतया न जानाति योगी तु सुखकालेऽपि तस्य दुःखात्मकत्वं पश्यतीति प्रतिपादयितुं विवेकिन इत्युक्तम्। ननु सुखसाधनतया सुखसम्भिन्नतया च सुखमेव कथं सर्वं न भवतीति चेत् न। दुःखेषु बलवद्द्वेषस्योक्तत्वात्। सामान्यतो बाहुल्यस्यापि अत्र नियामकत्वाच्च वैशेष्यात् तद्वाद इति न्यायात्। तदुक्तं विष्णुपुराणे। "कलत्रमित्रपुत्रार्थगृहक्षेत्रधनादिकैः। क्रियते न तथा भूरि सुखं पुंसां यथाऽसुखम्" इति। संसारे सुखापेक्षया च दुःखबाहुल्यं जैगीषव्यावट्यसंवादे व्यक्तीभविष्यतीति। तत्र परिणामदुःखहेतुतया सुखस्यापि दुःखतां प्रतिपादयति। सर्वस्य अय-

मिति। उत्सर्गतः सर्वलोकस्य सुखानुभवकाले तत्र सुखे रागो जायते रागाच्च सुखमिदं मे स्थिरं भवतु परमेश्वर! मा नश्यतु इत्यादि सङ्कल्पात्मको मानसः कर्माशयो धर्माधर्मरूपो भवति कर्माशयाच्च जन्मादिदुःखमिति प्रागेवोक्तमित्यर्थः। सुखभोगकाले रागजकर्माशयवद्द्वेषमोहजोऽपि कर्माशयः परिणामदुःखहेतुरस्तीत्याह। तथा च द्वेष्टीति। तथा च सुखभोगकाले तद्विरोधितया दुःखसाधनानि द्वेष्टि सुखभ्रंशे दुःखं मे मा भूयात् शत्रुश्च मे नश्यतु इत्यादिरूपेण। तथा दुःखसाधनानि परिहर्त्तुमशक्तो मुह्यति च इत्यतो द्वेषमोहकृतोऽप्यस्ति कर्माशय इत्यर्थः। रागद्वेषमोहानां च प्रवृत्त्यादिद्वारेणैव साक्षादपि अदृष्टहेतुत्वमस्तीति। तथा च उक्तमिति। सुखस्य रागानुविद्धत्वं च मया एवोक्तं सुखानुशयी राग इति सूत्रे सुखाभिज्ञस्येत्यादिभाष्येण इत्यर्थः। मानसकर्माशयद्वारा सुखस्य परिणामदुःखत्वं प्रतिपाद्य शारीरकर्माशयद्वारापि तदाह। नानुपहत्येति। शारीरः कर्माशय इति। सुखभोगकाल इति शेषः। एताभ्याञ्च मानसशारीराभ्यां कर्माशयाभ्यां वाचनिकोऽपि कर्माशयः शापाशीर्वादज उपलक्षणीयः। सुखस्यापि परिणामदुःखसम्बन्धेन दुःखत्वेऽविद्यासूत्रं प्रमाणीकृत्योपपादयति। विषयसुखं चेत्यादिना। ननु सर्वं दुःखान्त एवेदं वक्तुमुचितमिति चेन्न। सुखस्य अविद्यात्वोपपादनकाल एव दृष्टद्वारापि परिणामदुःखमुपदेष्टुमादावेव विषयसुखस्य अविद्यात्वप्रतिपादनात् अत्र च वक्ष्यमाणपारमार्थिकसुखव्यावर्त्तनाय विषयेत्युक्तम्। अविद्याविषयपदार्थानां बुद्धिमात्रतया सुखमविद्या इत्यभेदनिर्देशः। भोगेन सुखं भवतीत्येवंरूपा भोगजदुःखे सुखबुद्धिरविद्या, साच अविद्या न तत्सूत्रे विवेचिता अतोऽत्र तामविद्यां प्रतिपादयन्नेव प्रकारान्तरेण परिणामदुःखं दर्शयति। या भोगेषु इति।

तत्रादौ पारमार्थिके सुखदुःखे कथयति। तद्दुःखमित्यन्तेन। अयम्भावः। विषयसुखं पारमार्थिकसुखं न भवति दुःखबहुलत्वेन दुःखसम्भिन्नत्वेन च विवेकिनां निरुपाधिप्रियत्वाभावात्। सुखानुशयी राग इति सूत्रानुसारेण निरुपाधिप्रियत्वस्यैव सुखलक्षणत्वादिति। अतः शान्तिश्चित्तस्य व्यापारोपरमस्तन्निमित्तिका दुःखनिर्वृत्तिरिति यावत्। सैव पारमार्थिकं सुखं, सुखं दुःखसुखात्यय इति स्मरणात्। तृष्णादिदुःखासम्भिन्नतया विशेषदर्शिनामपि निरुपाधिप्रियत्वाच्च। तस्य च साधनं भोगेषु इन्द्रियाणां तृप्तिरिच्छाविच्छेद एव। तथा च श्रुतिः। स एको ब्रह्मण आनन्दः। श्रोत्रियस्य च अकामहतस्येति। स्मृतिश्च। "न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्" इति। अत्र विषयसुखशब्देन चित्तस्य शान्तिनिमित्तकाह्लादोऽपि गृहीतः तस्यापि दुःखसम्भिन्नत्वेन दुःखत्वस्य अविद्यालक्षणे विवक्षितत्वात् इति। या लौल्यादिति। या च इन्द्रियाणां लौल्यात् भोगतृष्णातश्चित्तस्य अनुपशान्तिर्वृत्तिचाञ्चल्यं तद्दुःखं दुःखबाहुल्यतो विवेकिभिर्हेयत्वादित्यर्थः। सुखदुःखयोस्तत्साधनयोश्चैवं निर्णये सति विषयसुखस्य तत्साधनभोगस्य आविद्यकमेव सुखत्वं तत्साधनत्वञ्च लब्धम्। अतश्च विषयसुखस्य परिणामदुःखत्वमित्येतत् प्रघट्टकेनाह। न च इन्द्रियाणामित्यादिना मग्न इत्यन्तेन। भोगाभ्यासमन्विति। तथा चोक्तं, 'न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते' इति। वृश्चिकेति। वृश्चिकविषभीतः कामादिक्षुद्रदुःखभीतस्तन्निवृत्त्याख्यसुखार्थी स्त्रीपुत्रादिभयमहादुःखसर्पैर्दष्ट इति दृष्टान्तार्थः। विषयानुवासित इति परिणामदुःखपङ्कमग्नतायां हेतुरुक्तः। विषयसंस्कारसंस्कृत इत्यर्थः। परिणामदुःखमुपसंहरन्नेव विवेकिन इति विशेषण-

ख्यावर्त्यमाह। एषा परिणामेति। दुःखता दुःखसमूहो जन-
तेतिवत्। प्रतिकूला द्वेष्या सुखकालेऽपि योगिनमेव क्लिश्नाति
दुःखाकरोतीत्यर्थः। भूते पश्यन्ति वर्वरा इति न्यायेन अयोगिनं
परिणामकाल एव विषयसुखं दुःखाकरोति योगिनन्तु स्वकाल एव
अनर्थहेतुतादर्शनेन दुःखाकरोतीति भावः। क्रमप्राप्तं तापदुःखं
व्याख्यातुं पृच्छति। अथ केति। तापो दुःखं किं तापजन्यदुः-
खसामान्यमित्यर्थः। उत्तरं, सर्वस्येति। पूर्ववदेव व्याख्येयम्।
पूर्वं सुखानुभवो रागानुविद्ध उक्त इदानीञ्च दुःखानुभवो द्वेषा-
नुविद्ध उच्यते इत्येव विशेष इति। स कर्माशय इति। सन्ताप-
कालीनः कर्माशयो द्वेषेणेव रागमोहाभ्यामपि पूर्ववत् मानसो
भवतीत्यर्थः। मनसा परिस्पन्दनं यदुक्तं तत् कायिकहिंसार्थ-
मेव न तु स्वातन्त्र्येण मानसकर्माशयहेतुरतो न पौनरुक्त्यम्।
यद्यपि तापदुःखतायामपि परिणामदुःखतैव अत्र प्रदर्श्यते
तथापि पूर्वकाले उत्तरकाले च सर्वदैव दुःखत्वात् तापजदुःखस्य
परिणामदुःखात् पृथङ्निर्देशः। अतः परिणामात् दुःखं परि-
णामदुःखमिति बोध्यम्। क्रमप्राप्तं संस्कारदुःखं पृच्छति। का
पुनरिति। सुखदुःखसंस्कारजन्यदुःखसामान्यमित्यर्थः। उत्तरम्,
सुखानुभवादिति। अत्रेयं प्रक्रिया। आदौ सुखदुःखानुभवैस्त-
त्संस्काराशयोऽनुदवुद्धसंस्कारस्ततः कालादिविशेषैस्तदुद्‌बोधः,
ततः स्मृतिस्ततो रागद्वेषौ, तयोश्च प्रवृत्तिः, ततश्च पुनर्दुःख-
मिति। ज्ञानसंस्कारात् दुःखं प्रतिपाद्य धर्माधर्मरूपात् कर्म-
संस्कारादपि दुःखं प्रतिपादयति। एवं कर्मभ्य इति। सुख-
दुःखरूपे विपाक इत्यन्वयः। ननु इयमपि परिणामदुःखतैवेति
चेत् सत्यं तथापि संस्कारपरम्परया अनन्तदुःखप्रतिपादनाय
गोवलीवर्दन्यायेन अस्य दुःखस्य पृथगुपन्यासो बोध्यः। विवे-
किन इति विशेषणस्य अभिप्रायं विस्तरतः सकलदुःखसाधारण-

माह। एवमिदमिति। स्वाभाविकतया अनन्तत्वलाभाय अनादीत्युक्तं स्रोतसो विशेषणम्। विप्रसृतमिति। विस्तीर्णमित्यर्थः। अक्षणः पात्रेण आधारेण गोलकेन तुल्यो विद्वानित्युक्तं विद्वणोति। यथा ऊर्णेति। एतानि भाविदुःखानि इतरमयोगिनं प्रतिपत्तारं शब्दादिना परिणामदुःखज्ञातारमपि अविद्वांसमित्यर्थः। इतरन्तु वर्त्तमानकाल एव क्लिश्नन्तीत्याह। इतरं त्विति। इतरं त्वयोगिनं त्रिपर्वाणस्तापा अनु स्रोत्पत्त्यनन्तरमेव प्लवन्ते व्याप्नुवन्तीत्यन्वयः। न तु पूर्वमिति शेषः। आधिभौतिकाधिदैविकाध्यात्मिकरूपाणि पर्वाणि येषां तापानां ते तथा त्रिपर्वत्वं हेतुगर्भविशेषणम्। वाह्येति। वाह्यशब्देन आधिभौतिकाधिदैविकयोर्ग्रहणम् इतरस्य विशेषणान्तरमनादीत्याद्यनुपातिनमित्यन्तम्। अनादिवासनाभिर्विचित्रया नानारूपया चित्तवृत्त्या चित्तनिष्ठया अविद्यया अनुविद्धं लिप्तमिव। अतएव हातव्येऽपि देहेन्द्रियादौ अहङ्कारममकारवन्तमिवेत्यर्थः। आत्मनोऽविद्यास्मितााद्यभावप्रतिपादनाय इवेत्याद्युक्तम्। शेषमतिरोहितम्। परिणामादिदुःखत्रयस्य साक्षिणो ज्ञानिन यत् फलं तदपि प्रसङ्गादाह। तदेवमिति। सुगमम्। गुणवृत्तिविरोधाच्चेति हेतुं व्याख्यातुकामो योजयति। गुणेति। गुणानां सत्त्वादीनां ये वृत्त्यतिशयास्तेषामेव विरोध एकदा अनवस्थानं न तु न्यूनाधिकभावेन वृत्तीनां विरोधोऽस्ति अतः प्राधान्येन सत्त्वपरिणामे सुखात्मकचित्तवृत्तावपि तदुपसर्जनतया रजोऽंशपरिणामभूतं दुःखमपि अल्पमस्ति एवेति दुःखसम्भिन्नत्वात् सर्वं सुखाद्यपि दुःखमेव विवेकदृष्ट्येति तस्य दलस्यार्थः। गुणवृत्तिविरोधादिति प्रामादिकपाठे तु गुणवृत्त्यतिशयस्यैव विरोधादित्यर्थः। तदेतत् व्याचष्टे। प्रख्याप्रवृत्तीति। प्रख्या प्रकाशः प्रवृत्तिः क्रिया स्थितिः स्तम्भः धर्मधर्म्यभेदात् तद्रूपाः सत्त्वादयो वुद्धिरूपेण परिणता गुणाः

परस्परसाहाय्याः सन्तः शान्त्यादिरूपं प्रत्ययं वृत्तिं त्रिगुणं सुख-दुःखमोहवन्तमेवारभन्ते सुखादीनां सत्त्वादिकार्य्यत्वात्। यः कश्चन प्रत्ययः शान्तो वा घोरो वा मूढ़ो वा भवति स सर्वोऽपि त्रिगुण एव न एकैकमात्रगुणइत्यर्थः। शान्तादिपरिभाषात्त्रयञ्च सुखदुःखमोहाधिक्यमात्रेणेति। तथा च सुखवति अपि प्रत्यये दुःखमस्ति एव। अत एकप्रत्ययोपादानत्वेन सुखेऽपि दुःखस्य अविभागलक्षणाभेदो हरीतक्यामिव षसां रसानामिति। प्रत्ययश्च बुद्धेर्वृत्तिः प्रदीपशिखावत् बुद्धेः शिखा द्रव्यरूपा 'भागगुणाभ्यां तत्त्वान्तरं वृत्तिः सम्बन्धार्थं सर्पती'ति सांख्यसूत्रात्। अतः प्रत्ययस्य सुखादिगुणवत्ता घटते इति। ननु सुखकाले सूक्ष्मो दुःखात्मको रजःपरिणामो नियमेन भवतीत्यत्र किं मानं तत्राह। चलं चेति। प्रदीपावयवानामिव बुद्ध्यवयवानां गुणानां वृत्तं क्रिया चञ्चला प्रतिक्षणमन्यान्या च भवति न तु निर्व्यापारा गुणास्तिष्ठन्ति अतस्तान्त्रिकैश्चित्तं क्षिप्रपरिणाम्युक्तमित्यर्थः। यद्यपि सर्वं जड़वस्तु प्रतिक्षणपरिणामि तथापि स्पष्टत्वाभिप्रायेण चित्तमिति विशेषवचनम्। तथा च चित्तगतस्य सत्त्वस्य वृत्तिकाले रजसो वृत्तिरावश्यकीति भावः। ननु एक एव प्रत्ययः कथं विरुद्धसुखादित्रयात्मकः स्यात् तत्राह। रूपातिशया इति। बुद्धेः रूपाणि अष्टौ भावा धर्मादयो धर्मज्ञानवैराग्यैश्वर्य्याधर्माज्ञानावैराग्यानैश्वर्य्याणि वृत्तयश्च द्रव्यरूपाः शान्तादिनामकाः परिणामास्तेषामतिशया उत्कर्षा एव परस्परं विरुध्यन्ते यदा धर्म उत्कृष्यते तदा न अधर्म उत्कृष्यते, एवं यदा ज्ञानादि तदा न अज्ञानादि, तथा शान्ताद्युत्कर्षकाले घोराद्युत्कर्षश्च विरुध्यते सामान्यानि तु अपकृष्टानि अतिशयैः सह प्रवर्त्तन्त एवेत्यर्थः। ननु भवतु चित्तस्य सुखात्मकप्रत्यये दुःखत्वं सुखात्मकेषु शब्दादिविषयेषु कुतो दुःखत्वं येन सर्वं दुःखं स्यादि-

त्यत आह । एवमित इति । यथा चित्तस्य प्रत्यया एवमेव सर्वे पदार्थाः सर्वरूपाः सुखदुःखमोहधर्मका भवन्ति अत एते गुणाः सत्त्वादयो घटादिरूपेणापि परिणताः परस्परसाहित्येनोत्पादितसुखदुःखमोहात्मकप्रत्यया इतीत्यर्थः । न हि विषयगतविशेषं विना विषयसम्बन्धमात्रेण सुखाद्यात्मकचित्तवृत्तिरुदेतुमर्हति अव्यवस्थापत्तेः । विषयगतविशेषस्य चित्तगतसुखादिनियामकत्वे विशेषः सुखादिरूप एव विषयेषु कल्प्यते कार्य्यानुरूपस्यैव कारणस्य औचित्यात् । अतो विषयेऽपि सुखादिधर्मान्तरं रूपादिवत् सिध्यतीति भावः । ननु सुखदुःखे रूपादिवद्विषयधर्मौ स्यातां मोहस्तु ज्ञानरूपः कथं विषयधर्मः स्यादिति चेन्न । अतस्मिन् तदाकारतामात्रस्यैव मोहशब्दार्थत्वात् । सा च विषयेषु अप्यस्ति महदादिविकाराकारतायाः प्रकृतौ अपारमार्थिकत्वात् तदुक्तं मोक्षधर्मे ।

जगन्मोहात्मकं विद्धि अव्यक्तं व्यक्तसंज्ञकम् ।

इति । अपि च सर्वकार्य्याणां बुद्ध्यात्मत्रिगुणात्मकमहत्तत्त्वस्य परिणामत्वादपि मोहवत्त्वमिति । ननु सर्वं यदि सर्वरूपास्तर्हि सर्वं सुखात्मकमपि स्यादिति न दुःखस्यापि हेयत्वं स्यादित्याशङ्कायामाह । गुणप्रधानेति । तथा च दुःखबहुलतया दुःखप्राधान्यात् दुःखमेव सर्वमिदं सुखं वैशेष्यात् तद्वाद इति न्यायेनेति भावः । उपसंहरति । तस्मादिति । तस्मात् परिणामेत्यादिसौत्रहेतुज्ञानादित्यर्थः । तदेवमत्र ध्यानादेर्व्युत्थितचित्तस्य योगसाधनं क्रियायोगमुक्त्वा तत्फलप्रसङ्गेन क्लेशास्त्रज्ञानोपायाश्च तेषां हेयत्वाय दुःखनिदानत्वं दुःखञ्च प्रतिपादितम् इदानीं संक्षेपेणोक्तः समग्रशास्त्रार्थो विस्तरेण सूत्रकारः पुनर्वदति सूत्रजातैः शास्त्रसमाप्तिपर्य्यन्तैः, तानि अवतारयितुं तेषां विषयजातमादौ सामान्यतः सङ्कलय्य दर्शयति । तदस्येति ।

तत्तस्मात् अस्य दृश्यसामान्यरूपस्य दुःखसमूहस्य उत्पत्तेर्वीजं मुख्य निमित्तकारणमविद्या प्रथमक्लेशः। तस्याश्च अविद्याया अत्यन्तोच्छेदहेतुस्तत्त्वज्ञानमतश्चिकित्साशास्त्रवदिदं योगशास्त्रं चतुर्व्यूहं चत्वारो व्यूहा हेयादीनां राशयः प्रतिपाद्या अस्मि-न्निति चतुर्व्यूहमित्यर्थः। रोगादितुल्यत्वं प्रतिपादयन्नेव तेषां व्यूहानां स्वरूपाण्याह। तत्र दुःखेति। संसरति अस्मिन्निति संसारोऽत्र प्रपञ्चः। ननु दुःखमेव हेयमिति वक्ष्यति तत्कथं संसारो हेय उच्यते तत्राह। दुःखबहुल इति। दुःखबहुलत्वात् संसार एव दुःखमित्यर्थः। प्रधानेति। ननु अविद्या दुःखहेतु-रित्युक्ता अत्र संयोग कथं दुःखहेतुः साध्यत इति चेत्, व्यापार-कथनाय इत्यवेहि। अविद्या हि बुद्धिपुरुषसंयोगाख्यजन्मद्वारैव दुःखहेतुः कार्य्यकारणाभेदेन च सैव बुद्धिरत्र प्रधानशब्दार्थः द्रष्टृदृश्ययोः संयोगो हेयहेतुरित्यागामिसूत्रादिति। संयोगस्येति। उक्तसंयोगस्यात्यन्तिकी निवृत्तिरेव हानं दुःखहानमिति यावत्। तच्चरमकारणत्वादित्यर्थः। हानोपाय इति। सम्यग्दर्शनमिति प्रकृतिपुरुषविवेकसाक्षात्कारो दुःखहानोपायो मोक्षोपाय इत्यर्थः। असम्प्रज्ञातयोगस्तु आशुतरमोक्षार्थमेवापेक्ष्यत इत्या-शयः। येन योगो हानोपायतया अत्र नोक्तः। ये तु नास्तिका मन्यन्ते संयोगहानं न मोक्षः किन्तु चित्तरूपस्यात्मनस्त्याग एव मोक्षः। किञ्च संसारिविज्ञानसन्तानोच्छेदेन जीवन्मुक्तविज्ञान-सन्तानलाभ एव मोक्ष इति तन्मतनिरसनपूर्वकं स्वशास्त्रस्यैव सम्यग्दर्शनत्वमवधारयति। तत्र होति। तत्र चतुर्व्यूहमध्ये आत्मनो हानमुपादानं वा न पुरुषार्थ इत्यर्थः। इतिशब्दस्य हेतुवाद इत्यनन्तरमन्वयः। उक्तार्थे हेतुमाह। हाने तस्येति। तस्य हाने स्वत्यागे हि स्वोच्छेदवचनं प्रसज्येत मुख्यत्यागस्य भेद-तन्त्रत्वेनात्मनि असम्भवात् तच्चायुक्तं स्वनाशस्य लोके पुरुषार्थ-

त्वादर्शनात् स्वीयतयैव सुखदुःखाभावयोः पुरुषार्थत्वादित्यर्थः । स्वयं म्रियमाणोऽपि दुःखहानार्थमेवाग्निप्रवेशादौ प्रवर्त्तते न तु स्वनाशार्थमित्यर्थः । हेतुवाद इति । स्वरूपस्य स कारणतावादः स्यात् । तथा च भावकार्य्यत्वेन विनाशित्वप्रसङ्ग इत्यर्थः । उभयेति । इत्यतो हानोपादानोभयनिषेधे स्वयं नित्यतावाद एव परिशेषात् सिध्यतीति । अत एतदेव यथोक्तचतुर्व्यूहशास्त्रं सम्यग्दर्शनं सम्यग्दृश्यतेऽनेन इति व्युत्पत्त्येत्यर्थः । इदानीं वक्ष्यमाणसूत्रगणमवतारयति । तदेतदिति । तदेतच्छास्त्रं चतुर्व्यूहमितिक्रमेणाभिधीयते प्रतिपाद्यते सूत्रकारेणेत्यर्थः ॥ १५ ॥

* हेयं दुःखमनागतम् ॥ १६ ॥ *

दुःखमतीतमुपसम्भोगेन अतिवाहितं न हेयपक्षे वर्त्तते, वर्त्तमानञ्च स्वक्षणे भोगारूढ़मिति न तत् क्षणान्तरे हेयतामापद्यते, तस्माद् यदेव अनागतं दुःखं तदेव अक्षिपात्रकल्पं योगिनं क्लिश्नाति न इतरं प्रतिपत्तारं, तदेव हेयतामापद्यते ॥ १६ ॥

तस्माद् यदेव हेयमित्युच्यते तस्यैव कारणं प्रतिनिर्दिश्यते ।

अनागतमितिविशेषणस्य फलमाह ।

दुःखमतीतमित्यादिना । अतिवाहितमतिक्रान्तमतः सिद्धतया तद्धानं न पुरुषार्थः तथा वर्त्तमानमपि स्वसत्ताकाले भुज्यत एवेति तथा वक्तुं न शक्यते । स्वोत्तरोत्पन्नगुणेन च द्वितीयक्षणे स्वयमेव भङ्क्ष्यतीति तद्धानार्थः प्रयासो विफल इत्यर्थः ।

ननु एवमनागतस्यापि हेयत्वं न घटते परचित्तदुःखस्य स्वचित्ते स्वत एव अभावात्। स्वचित्तवृत्तेश्च अनागतदुःखस्यावश्यम्भावित्वात्। अन्यथा सत्त्वे प्रमाणाभावादिति चेन्न। स्वचित्तस्यैव अनागतदुःखस्य कारणोच्छेदेनानुत्पत्त्या हेयत्वात् ; वर्त्तमानलक्षणमप्राप्तस्यापि अनागतदुःखस्य चित्तनाशेन नाशात् कदाचिदवर्त्तमानोऽपि च अनागतधर्मोऽनुमानात् सिध्यति सर्वं सर्वात्मकमिति भाष्यकारेण तृतीयपादे सर्वत्रैव परिणामिवस्तुनि विकारजननशक्तेः कार्य्यानागतावस्थारूपाया जलभूम्यादिदृष्टान्तैः शान्तोदिताव्यपदेश्येत्यादिसूत्रेऽनुमेयत्वादिति, शेषं पूर्वसूत्रे व्याख्यातप्रायम्। अस्माच्च सूत्रादात्यन्तिकी दुःखनिवृत्तिरेव मोक्ष इति सिद्धम्। अस्मिन् सूत्रे दुःखं मुख्यमेव ग्राह्यं मुख्यस्यैव स्वतो हेयत्वात्। तद्धानञ्च समवायसम्बन्धेन यद्यपि पुरुषे नित्यसिद्धं तथापि भोग्यतारूपस्वत्वसम्बन्धेन धनादीनामिव तद्धानं न नित्यसिद्धमिति। तेन सम्बन्धेन तद्धानं पुरुषार्थ इत्याशयः। तथा हि वक्ष्यति 'तस्मिन्निवृत्ते पुरुषः पुनरिदं तापत्रयं न भुङ्क्ते' इति। तदेतदुक्तं सांख्यन्याययोः त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थ इति। दुःखात्यन्तविमोक्षोऽपवर्ग इति। यत्तु आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितमित्येवंविधवाक्यजातं तत् दुःखनिवृत्त्याख्यसुखपरमेव तदानीमभोग्यसुखस्य अपुरुषार्थत्वात्। सुखं दुःखसुखात्यय इति परिभाषया रूढ़िबाधनाच्च। हेयस्य सूत्रं व्याख्याय क्रमप्राप्तहेयहेतुप्रतिपादकं सूत्रमवतारयति। तस्मात् यदेव हेयमिति ॥ १६ ॥

* द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥ १७ ॥ *

द्रष्टा बुद्धेः प्रतिसंवेदी पुरुषः, दृश्याः बुद्धिसत्त्वोपारूढ़ाः सर्वे धर्म्माः, तदेतद् दृश्यमयस्का-

न्तमणिकल्पं सन्निधिमात्रोपकारि दृश्यत्वेन भवति पुरुषस्य स्वं दृशिरूपस्य स्वामिनः, अनुभवकर्मविषयतामापन्नमन्यस्वरूपेण प्रतिलब्धात्मकं स्वतन्त्रमपि परार्थत्वात् परतन्त्रम्, तयोर्दृग्दर्शनशक्त्योरनादिरर्थकृतः संयोगो हेयहेतुः दुःखस्य कारणमित्यर्थः । तथा चोक्तं तत् संयोगहेतुविवर्जनात् स्यादयमात्यन्तिको दुःखप्रतीकारः कस्मात्, दुःखहेतोः परिहार्य्यस्य प्रतीकारदर्शनात्, तद्यथा, पादतलस्य भेद्यता, कण्टकस्य भेत्तृत्वम्, परिहारः कण्टकस्य पादानधिष्ठानम्, पादत्राणव्यवहितेन वाधिष्ठानम्, एतत् त्रयं यो वेद लोके स तत्र प्रतीकारमारभमाणो भेदजं दुःखं नाप्नोति, कस्मात्, त्रित्वोपलब्धिसामर्थ्यादिति, अत्रापि तापकस्य रजसः सत्त्वमेव तप्यं, कस्मात्, तपिक्रियायाः कर्म्मस्थत्वात्, सत्त्वे कर्म्मणि तपिक्रिया न अपरिणामिनि निष्क्रिये क्षेत्रज्ञे, दर्शितविषयत्वात् सत्त्वे तु तप्यमाने तदाकारानुरोधी पुरुषोऽनुतप्यत इति दृश्यते ॥ १७ ॥

दृश्यस्वरूपमुच्यते ।

द्रष्टृपदार्थमाह। द्रष्टेति। बुद्धेः प्रतिसंवेदनं संवेदनस्य बुद्धिवृत्तेः प्रतिविम्बः। प्रतिध्वनिवदयं प्रयोगः। सोऽस्यास्तीति बुद्धिसाक्षीति फलितार्थः। दृश्यपदार्थमाह। दृश्या बुद्धिसत्त्वेति। बुद्धिसत्त्वस्यापि दृश्यत्वेन अत्र विशेषणं विवक्षितं धर्माय इति च बुद्ध्यारूढ़त्वेन बुद्धिधर्मत्वमभिप्रेत्योक्तं न तु बुद्धिकार्य्यत्वाभिप्रायेण प्रधानादेरपि दृश्यत्वेन तत्त्यागानौचित्यात् उत्तरसूत्रे प्रधानस्यैव मुख्यतो दृश्यत्ववचनाच्च। यद्यपि बुद्ध्यारूढ़ो भवन् पुरुषोऽपि दृश्यः तथापि तस्य निर्दुःखतया तद्दर्शनं न हेयहेतुरित्याशयेनात्र दृश्यमध्ये पुरुषं न गणयिष्यतीति। तथा च सुखदुःखमोहात्मकदृश्यगत्या बुद्ध्या सह द्रष्टुः साक्षिणः काष्ठाग्निवत् सम्बन्धो बन्धाख्यः पुरुषस्य दुःखहेतुरिति सूत्रार्थः। न तु बुद्ध्यारूढैर्दृश्यैर्द्रष्टुर्ज्ञानरूपः संयोगो हेयहेतुरत्र विवक्षितः स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोग इत्यागामिसूत्रेण अस्य संयोगस्य ज्ञानहेतुत्वेनैव लक्षणीयत्वात् न तु ज्ञानरूपत्वेनेति। अस्माच्च सूत्राद् बुद्ध्यात्मसंयोगवत् घटाद्यात्मसंयोगोऽपि भोगहेतुर्बोध्यः। भोक्तृभोग्यसंयोगस्यैव सामान्यतो भोगहेतुतया लाघवेनौचित्यात्। विषयभोगे च बुद्ध्यवच्छेदेन विषयसंयोगस्य हेतुत्वान्नातिप्रसङ्ग इति। अस्य च संयोगस्य पुरुषार्थो हेतुरिति वक्तुं सकलपुरुषार्थवत्त्वरूपं स्वत्वं बुद्धौ पुरुषस्य प्रतिपादयति। तदेतदिति। नच तस्य हेतुरविद्या इत्यागामिसूत्रेणैव संयोगस्य कारणं वक्ष्यत इति नास्ति संयोगकारणापेक्षेति वाच्यम्। अविद्याया अपि पुरुषार्थासमाप्तिद्वारैव बन्धहेतुताया वक्ष्यमाणत्वात् इति। तदेतदित्यादेरयमर्थः। तद्बुद्धिसत्त्वम् एतज्जगद्दृश्यं यत्र अस्तीत्येतद्दृश्यम् अतोऽयस्कान्तवत् सन्निधिमात्रेणोपकारितया स्वयं दृश्यतया च ज्ञानमात्रस्वरूपस्य स्वामिनः पुरुषस्य स्वमात्मीयं भवतीति। ननु बुद्धेः कथमन्यः स्वामी

स्वीक्रियते सैव अपरतन्त्रा स्वयं द्रष्ट्री स्वार्थैव भवतु तत्राह। अनुभवकर्मेत्यादि। यतः कर्मकर्तृविरोधेन स्वदृश्यत्वानुपपत्त्या अनुभवाख्यं यत्पुरुषस्य कर्म तद्विषयतामापन्नं सदेव अन्यरूपेण पुरुषचैतन्येन प्रतिलब्धात्मकं सिद्धसत्ताकम्, अन्यरूपेणान्यप्रयोजनेन लब्धस्थितिकं वा अतः स्वतन्त्रं पुरुषानाश्रितमपि परार्थत्वात् परतन्त्रं परस्य स्वमित्यर्थः। तदेवं दृश्याख्यभोग्यात्मकाखिलपुरुषार्थस्य बुद्धिनिष्ठत्वे सिद्धे स एव पुरुषार्थोऽनागतावस्थो बुद्धिपुरुषयोः संयोगे हेतुरिति वदन् सूत्रवाक्यार्थमाह। तयोरिति। तयोः स्वस्वामिनोः, दृश्यते अनयेति दर्शनं बुद्धिः। अनादित्वात्र प्रवाहरूपेण पुरुषार्थकृतत्ववचनात्। ननु पुरुषार्थसंयोगाङ्गीकारे सत्यपरिणामित्वभङ्ग इति चेन्न। सामान्यगुणातिरिक्तधर्मोत्पत्तेरेव व्यवहारानुसारेण परिणामशब्दार्थत्वावधारणात्। घटाद्यसंयोगाद्यैराकाशस्य द्वित्वादिभिश्च पुरुषस्य परिणामव्यवहाराभावात्। पद्मपत्रस्थतोयेन पद्मपत्रस्यापरिणामासंयोगादिश्रवणाच्च। संयोगविभागसंख्यादयस्तु द्रव्यसामान्यगुणा इति। अपि च श्रुतिस्मृत्योः सुखादिरूपाः परिणामा एव पुरुषे नाभ्युपगम्यन्ते, मनोऽन्वयव्यतिरेकेण मनस्येव लाघवतस्तत्कल्पनात् मनसोऽवच्छेदकत्वं परिकल्प्य अन्यत्र तत्कल्पने गौरवात्। संयोगादिकं प्रति तु द्रव्यत्वेनैव हेतुतया पुरुषस्यापि तत्सम्भवात्। पुरुषस्य द्रव्यत्वं च अनाश्रितत्वतः परिमाणतश्च सिद्धमिति। यद्यपि कारणावस्थबुद्धिः पुरुषश्च विभुः। तथापि तयोः संयोगः परिच्छिन्नगुणान्तरावच्छेदेन सम्भवत्येव महदाद्यखिलपरिणामानां त्रिगुणसंयोगं विना अनुत्पत्तेः, स च संयोगजः संयोगः न तु कर्मजः, अवयवसंयोगादवयविसंयोगवदवच्छेदकीभूतगुणसंयोगादेव विभुनोः संयोगोत्पत्तेः। भूतलस्य घटसंयोगेन घटावच्छिन्नाकाशसंयोगोत्पत्तिवत् वैशेषिक-

शास्त्रे विभुनोः संयोगश्च साक्षादेव निषिद्धः न तु संयोगजः संयोग इति । यदि चात्मनः संयोग एव नास्तीति स्वीक्रियेत तर्हि प्रकृतिपुरुषसंयोगात् सृष्टिस्तद्वियोगतश्च प्रलयं इति श्रुति-स्मृतिसूत्राणि नोपपद्येरन् । नच भोक्तृभोग्ययोग्यतैव औपचारिकोऽत्र संयोगो वक्तव्यः तस्याः स्वस्वामिभावरूपत्वेन अनादितया कार्य्यत्वस्य अञ्जसानुपपत्तेः । किञ्च तस्या अविनाशित्वे ज्ञाने-नाश्यत्ववचनविरोधः नाशित्वे परिणामः पुरुषस्य स्यादिति । ननु संयोगस्वीकारे पुरुषस्यासङ्गताक्षतिरिति चेन्न । पुष्करपत्रे पुरुषदृष्टान्ते संयोगसत्त्वेऽपि असङ्गताभ्युपगमात् । स्वाश्रय-विकारहेतुसंयोगस्यैव सङ्गत्वात् । पुरुषे च तादृशसंयोगास्वीकारादिति । तस्मात् पुरुषार्थनिमित्तको बुद्धिपुरुषयोः संयोगो भवति स एव च जन्मरूपतया दुःखहेतुरिति सिद्धम् । स च संयोगविशेषः परमेश्वरस्य योगमाया योगीन्द्रैरपि अचिन्त्या श्रुतिस्मृतिगम्या न विशेषतस्तर्कगोचरा भवति । यया खलु नित्य-मुक्तमसङ्गमविद्यादिरहितं विभु चिन्मात्रमात्मानं जीवजातमीश्वरो निबध्नाति । तथा चोक्तम् । 'अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्' इति । 'सेयं भगवती माया यन्नयेन विरुध्यते । ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम्' इति च । संयोगस्य दुःखहेतुत्वे पञ्चशिखाचार्य्यस्य संवादमाह । तथा च उक्तमित्यादिना प्रतीकार इत्यन्तेन । तयोर्बुद्धिपुरुषयोः संयोगो दुःखहेतुस्तस्य परिवर्जनात् अत्यन्तोच्छेदात् दुःखस्यात्यन्तिकः प्रतीकार उच्छेदः स्यादित्यर्थः । ननु अनादिकालप्रवृत्तस्य दुःख-हेतुसंयोगस्य उच्छेदो न शक्यसम्भावन इत्याशयेन पृच्छति प्रस-ङ्गात् तच्छक्यत्वमवधारयितुम् । कस्मादिति । उत्तरम् । दुःख-हेतोरिति । परिहार्य्यस्य इत्यनेन प्रकृत्यादिनित्यव्यावृत्तिः । तथा च दुःखहेत्वनित्यत्वलिङ्गेन संयोगस्य शक्योच्छेदकत्वम् अनु-

भावः । अनेन च सूत्रेण चैतन्याधीना सत्ता दृश्यस्य न स्वत इति सिद्धम् । सूत्रान्तरमवतारयितुमुपक्रमते । तत्स्वरूपमिति । ननु दृश्यस्वरूपं यदि परस्य पुरुषस्य रूपेण दर्शनेन निमित्तेन तदर्थं प्रति लब्धात्मकं लब्धसत्ताकं तर्हि भोगापवर्गार्थतायां भोगापवर्गरूपे पुरुषस्य अर्थसमूहे कृते सति पुरुषेण न दृश्यत इति कृत्वा स्वरूपत्यागान्नाशः अत्यन्तोच्छेदः अस्य गुणादेः प्रसक्त इत्यर्थः । प्रयोजनसमाप्त्या हि प्रयोजनकारि नाश्यत इति धर्माधर्मवासनाचित्तादिस्थले दृष्टं तथा च प्रकृतिनित्यत्वसृष्ट्यादिप्रवाहानुच्छेदनित्यैश्वर्य्यादिसिद्धान्तहानिरिति पूर्वः पक्षः । अत्र सिद्धान्तमाह । न तु विनश्यतीति । पृच्छति । कस्मादिति । अत्र प्रत्युत्तरं सूत्रं पठति ॥ २१ ॥

कस्मात्,

* कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ॥ २२ ॥ *

कृतार्थमेकं पुरुषं प्रति दृश्यं नष्टमपि नाशं प्राप्तमपि अनष्टं तत्, अन्यपुरुषसाधारणत्वात् । कुशलं पुरुषं प्रति नाशं प्राप्तमपि अकुशलान् पुरुषान् प्रति अकृतार्थमिति तेषां दृशेः कर्मविषयतामापन्नं लभत एव पररूपेण आत्मरूपमिति, अतश्च दृग्दर्शनशक्त्योर्नित्यत्वात् अनादिः संयोगो व्याख्यात इति, तथाचोक्तं धर्मिणामनादिसंयोगाद् धर्ममात्राणामपि अनादिः संयोग इति॥२२

व्याचष्टे । कृतार्थमिति । बुद्ध्या कृतः समापितोऽर्थो य-

स्येति कृतार्थमेकं कञ्चिन्मुक्तपुरुषं प्रति गुणादिकं नष्टं प्रयोजनाकरणात् राज्ञो राज्यवन्नष्टमपि सामान्यतो न नष्टं तस्मिन् कृतार्थे अन्यपुरुषे च तस्य साधारणत्वादित्यर्थः। योजितं सूत्रं तात्पर्यतो व्याचष्टे। कुशलमित्यादिना रूपमितीत्यन्तेन। कुशलं कल्याणमुक्तम्। अकृतोऽर्थो येनेति अकृतार्थं, शेषं व्याख्यातप्रायम्। सोऽयं सूत्रार्थः श्रुत्यापि अनुगृहीतो, यथा

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥

इति। तदनेन सूत्रेण प्रकृतिनित्यत्वं पुरुषबहुत्वं च प्रतिपादितम्। तथा पुरुषभेदात् प्रकृतेर्बहुत्वं नास्तीत्येवंरूपं प्रकृतेरेकत्वं च प्रतिपादितं विज्ञानवादादिनिरासायेति। नन्वेवं 'यथा घटीकुम्भकमण्डलुस्थमाकाशमेकं बहुधा हि भिन्नम्। तथा सुबाहुः स च काशिपोऽहमन्ये च देहेषु शरीरभेदैः' इत्येवंविधश्रुतिस्मृतिशतोक्तं सर्वात्मनामैक्यं विरुद्धमिति चेन्न। तादृशवाक्यैः प्रकरणभेदेन क्वचिदवैधर्म्यलक्षणाभेदप्रतिपादनात्। सर्वात्मनामवैधर्म्यज्ञानेनैव अपरिणामितया बुद्ध्याद्यभिमाननिवृत्तितो मोक्षसिद्धेः। क्वचिच्च अविभागलक्षणाभेदप्रतिपादनात्। ततश्चैकस्यैव परमात्मनो मुख्यात्मता सिध्यतीति। एतच्च सर्वं ब्रह्ममीमांसाभाष्ये श्रुतिभाष्यादिषु च प्रपञ्चितमस्माभिः। न पुनस्तादृशवाक्यानां जीवात्मपरमात्माखण्डतापरत्वं सम्भवति बन्धमोक्षानुपपत्तिरूपसत्तर्कानुग्रहेण बलवद्भिर्भेदग्राहकश्रुतिस्मृतिशतैर्विरोधात्। 'अधिकं तु भेददर्शनात्' 'अंशो नानाव्यपदेशात्' इति ब्रह्ममीमांसामारभ्य सर्वदर्शनसूत्रैरतिस्फुटमात्मभेदप्रतिपादनेन भेदस्यैव श्रुत्यर्थत्वावधारणाच्च। अपि च सर्वात्मनामैक्यमात्रज्ञानान्न संसाराभिमाननिवृत्तिः सम्भवति। एकस्मिन्नेव आकाशेऽवच्छेदभेदेन शब्दतदभाववत् एकस्मिन्नेव आत्मनि

अवच्छेदेन संसारासंसारयोः सम्भवात्। विवेकज्ञानापेक्षणे च तत एवाभिमाननिवृत्तेरैक्यज्ञानस्य न दृष्टद्वारा मोक्षहेतुत्वं स्यात् नापि आत्मैक्यज्ञानात् सर्वात्मब्रह्मोपासनं सम्भवति। साक्षात् कुक्कुरत्वादिदृष्ट्या अत्र ब्रह्मणो निन्दाया एव प्रसङ्गात्। जड़वर्गेषु अविभागलक्षणाभेदेनोपासनाया अवश्यकल्प्यत्वेन चेतनवर्गेषु अपि तथैव औचित्याच्च। तस्मात् प्रयोजनाभावात् न आत्मा-खण्डताप्रतिपादने श्रुतिस्मृत्योस्तात्पर्य्यम्। अधिकन्तु ब्रह्ममी-मांसायामस्माभिराधुनिकवेदान्तिब्रुवमतखण्डनावसरे प्रतिपा-दितमिति दिक्। तदेवं विशेषाविशेषेत्यादिसूत्रगणेन द्रष्टुः पुरुषस्य स्वतएव दर्शनशक्तेश्च बुद्धेः कारणरूपेण नित्यत्वे सिद्धे तयोः संयोगः प्रवाहरूपेण अनादिरिति शास्त्रेषु व्याख्यातमुप-पन्नमित्याह। अतश्चेति। विनाशित्वेऽपि भावरूपाणां गुणाना-मनादित्वं न घटेत ततश्च तत्कार्य्यबुद्धेः ततश्च बुद्धिपुरुषसंयोग-स्येति भावः। बुद्धिपुरुषसंयोगस्य प्रवाहरूपेण अनादित्वे पञ्च-शिखाचार्य्यसंवादमाह। तथा चोक्तमिति। धर्मिणां गुणानां पुरुषैः सह अनादिसंयोगादिति तु गुणनित्यत्वं विना धर्मसामा-न्यानां बुद्ध्यादीनां संयोगानादित्वं न घटत इति प्रतिपादनाय प्रदर्शितम्। तदेवं प्रकाशप्रवृत्तीत्यादिसूत्रैः पञ्चविंशतितत्त्वानि अत्र संक्षेपतो विवेकिनोक्तानि विस्तरस्तु सांख्यदर्शने द्रष्टव्यः। प्रकृतिपुरुषविवेकस्यैव मुख्यतस्तत्र प्रतिपादनात् अत्र योगस्यै-वेति। द्रष्टृदृश्ययोः स्वरूपमुक्तम् इदानीं तत्संयोगस्य स्वरूप-प्रदर्शकं सूत्रमुत्थापयति। संयोगस्वरूपेति द्रष्टृदृश्ययोः संयोग-सामान्यं न हेयहेतुः प्रलयमोक्षादिसाधारण्यात् अतः संयोग-गतविशेषावधारणायेदं सूत्रं प्रवृत्त इत्यर्थः॥ २२॥

संयोगस्वरूपाभिधित्सयेदं सूत्रं प्रवर्त्तते।

*स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुसंयोगः॥२३॥*

पुरुषः स्वामी दृश्येन स्वेन दर्शनार्थं संयुक्तः, तस्मात् संयोगाद् दृश्यस्य उपलब्धिर्या स भोगः, या तु द्रष्टुः स्वरूपोपलब्धिः सोऽपवर्गः। दर्शनकार्य्यावसानः संयोग इति दर्शनं वियोगस्य कारणमुक्तं, दर्शनमदर्शनस्य प्रतिद्वन्द्वीति अदर्शनं संयोगनिमित्तमुक्तं, नात्र दर्शनं मोक्षकारणम्, अदर्शनाभावादेव बन्धाभावः स मोक्ष इति, दर्शनस्य भावे बन्धकारणस्यादर्शनस्य नाश इत्यतो दर्शनज्ञानं कैवल्यकारणमुक्तम्, किञ्च इदमदर्शनं नाम, किं गुणानामधिकारः आहोस्विद् दृशिरूपस्य स्वामिनो दर्शितविषयस्य प्रधानचित्तस्यानुत्पादः, स्वस्मिन् दृश्ये विद्यमाने दर्शनाभावः। किमर्थवत्ता गुणानाम्। अथाविद्या स्वचित्तेन सह निरुद्धा स्वचित्तस्य उत्पत्तिबीजम्। किं स्थितिसंस्कारक्षये गतिसंस्काराभिव्यक्तिः, यत्र इदमुक्तं प्रधानं स्थित्यैव वर्त्तमानं विकाराकरणादप्रधानं स्यात्, तथा गत्यैव वर्त्तमानं विकारनित्यत्वादप्रधानं स्यात्, उभयथा चास्य प्रवृत्तिः प्रधानव्यवहारं लभते नान्यथा,

कारणान्तरेषु अपि कल्पितेषु एव समानश्चर्चः। दर्शनशक्तिरेवादर्शनमित्येके प्रधानस्य आत्मख्यापनार्था प्रवृत्तिः इति श्रुतेः, सर्वबोध्यबोधसमर्थः प्राक् प्रवृत्तेः पुरुषो न पश्यति, सर्वकार्य्यकरणसमर्थं दृश्यं तदा न दृश्यत इति। उभयस्यापि अदर्शनं धर्म इत्येके, तत्रेदं दृश्यस्य स्वात्मभूतमपि पुरुषप्रत्ययापेक्षं दर्शनं दृश्यधर्मत्वेन भवति, तथा पुरुषस्य अनात्मभूतमपि दृश्यप्रत्ययापेक्षं पुरुषधर्मत्वेनेव दर्शनमवभासते। दर्शनज्ञानमेवादर्शनमिति केचिदभिदधति, इत्येते शास्त्रगता विकल्पाः, तत्र विकल्पबहुत्वमेतत्सर्वपुरुषाणां गुणसंयोगे साधारणविषयम्॥ २३॥

स्वशक्तिर्दृश्यं भोग्यतायोग्यत्वात्। स्वामिशक्तिर्द्रष्टा भोक्तृयोग्यत्वात् तयोः स्वरूपोपलब्धौ हेतुर्यः संयोगविशेषः स एव द्रष्टृदृश्यसंयोगोऽत्र हेयहेतुरुक्त इत्यर्थः। विभुना द्रष्टृदृश्यसंयोगसामान्यस्य सार्वकालिकत्वेन हेयाहेतुत्वादिति भावः। स च संयोगविशेषो बुद्धिद्वारकः दृश्या बुद्धिसत्त्वोपारूढ़ाः सर्वे धर्मा इति पूर्वभाष्यात्। अतो दृश्यवत्या बुद्ध्या संयोग एव अत्र संयोगविशेषः।

आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः।

इति। एवंविधश्रुत्यादिभ्यो लिङ्गदेहात्मसंयोगादेवात्मनो

विषयदर्शनावगमादिति। एतेन भोक्तृभोग्ययोग्यतैव द्रष्टृदृश्ययोरनादिः सम्बन्धः संयोगाङ्गीकारे पुरुषस्य परिणामित्वापत्तेरिति कस्यचित् प्रलापः सूत्रस्वरसाद्धेयः। तथा सति स्वस्वामिभावः संयोग इत्येव सूत्रौचित्यात् संयोगस्य अनाद्येकव्यक्तित्वे सति आगामिसूत्राभ्याम् उत्पत्तिविनाशवचनानुपपत्तेश्च चेतनत्वाचेतनत्वातिरिक्तस्य प्रतिनियतस्य योग्यत्वस्य ज्ञानावच्छेदकस्य अनिरूपणाच्च। तयोश्च मोक्षकालसाधारण्येन हेयाहेतुत्वात्। यदि च स्वभुक्तशक्तिवासनावत्त्वं प्रवाहरूपेण च वासनाया अनादित्वं तदेव च संयोग इत्युच्यते। तथापि तादृशसंयोगस्य भाष्यवक्ष्यमाणम् अविद्यावासनाजन्यत्वादिकं न घटेतैव यथाश्रुतसंयोगत्यागानौचित्यादिकं चेति। यच्च उक्तं संयोगेन परिणामित्वमिति तत्परिणामलक्षणाज्ञानात् संयोगविभागमात्रेण आकाशादौ परिणामव्यवहाराभावेन सामान्यगुणातिरिक्तधर्मोत्पत्तिरेव परिणाम इत्युक्तत्वात् अन्यथा च प्रतिसर्गं प्रकृतिपुरुषयोः संयोगविभागौ श्रुतिस्मृत्योः श्रूयमाणौ विरुध्येताम्। न हि प्रतिसर्गं योग्यतोत्पादविनाशौ घटेतां पुरुषस्य परिणामप्रसङ्गात्। यथाश्रुतसंयोगविभागयोरेव उत्पादादिक्रमौचित्याच्चेति दिक्। सूत्रार्थं विवृणोति। पुरुष इत्यादिना सोपवर्ग इत्यन्तेन। संयुक्त इति। भवतीति शेषः। सूत्रे स्वरूपपदं च विवेकख्यातिपर्य्यन्तस्य दर्शनसामान्यस्य संयोगजन्यत्वप्रतिपादनाय इति। इदानीं विवेकख्यातिरविप्लवा हानोपाय इति तस्य हेतुरविद्येति च आगामिसूत्रद्वयार्थोऽनेनैव सूत्रेणोपपादित इत्येतत्क्रमेण प्रतिपादयति। दर्शनकार्य्येत्यादिना। कृतकृत्यस्य प्रयोजनाभावेन अवस्थानासम्भवेन दर्शनरूपकार्य्यावसानः संयोग इत्यतो दर्शनं द्रष्टृस्वरूपोपलब्धिर्वियोगकारणमर्थादनेन सूत्रेणोक्तमुपपादितं तथा दर्शनमदर्शनस्य प्रतिद्वन्द्वि

विरोधीत्यतोऽदर्शनं संयोगहेतुरित्यपि अर्थादुक्तमुपपादितम्। दर्शनादर्शनयोर्विरोधेन विरुद्धयोरेव वियोगसंयोगयोस्तदुभयकार्य्यत्वौचित्यादित्यर्थः। ननु अदर्शनं संयोगकारणं तर्हि अदर्शनाभावादेव संयोगविनिवृत्त्यात्मको मोक्षो भविष्यति कथं दर्शनमपि मोक्षहेतुरुच्यते इत्याशङ्कायामाह। नात्र दर्शनमिति। अस्मच्छास्त्रे दर्शनं तत्त्वज्ञानं न मोक्षकारणं गौरवात् निरोधादिभिर्व्यवधानेन मोक्षाव्यवहितप्राक्काले ज्ञाननियमासम्भवात् किन्तु अदर्शनस्य वक्ष्यमाणरूपस्याभावादेव द्रष्टृदृश्यसंयोगाभावः स एव मोक्ष इत्यर्थः। एतेन मोक्षस्य अनिमित्तकतया स्वाभाविकत्वरूपं नित्यत्वं लब्धम्। नन्वेवं विवेकख्यातिरविप्लवा हानोपाय इत्यग्रिमसूत्रविरोधो दर्शनं वियोगस्य कारणमिति स्वोक्तिविरोधश्च तत्राह। दर्शनस्य भाव इति। सुगमम्। उक्तं शास्त्रे। तथा च तत्त्वज्ञानं मोक्षे प्रयोजकमात्रमिति। उत्तरसूत्रेण असाधारणं संयोगहेतुमदर्शनम् अवधारयितुमुक्तादर्शनं विकल्पय पृच्छति। किं चेदमिति। किं पुनः संयोगकारणत्वेनोक्तम् अदर्शनमित्यर्थः। नामेति वाक्यालङ्कारे। यद्यपि संयोगोऽदर्शनकारणमिति सूत्रणाद्दर्शनस्यानुत्पाद एव संयोगहेतुतया अत्र प्रसक्तो नान्यः। तथापि तत्समनियततया अन्येषामपि संशयकोटित्वं बोध्यम्। तत्र प्रथमो विकल्पः किं गुणानामिति। गुणानां सत्त्वादीनाम् अधिकारः कार्य्यारम्भणसामर्थ्यम्। ज्ञानाग्न्यदग्धा कार्य्यविशेषजननशक्तिरित्यर्थः। ततोऽपि हि संसारहेतुसंयोगविशेषो जायत इति द्वितीयं विकल्पं परित्यज्य सर्वविकल्पेषु बन्धकत्वगुणयोगेन अदर्शनशब्दो गौणः। द्वितीयं विकल्पमाह। आहोस्विदिति। अदर्शनमित्यत्र दर्शनशब्दस्य करणसाधनत्वप्रतिपादनाय दृशिरूपस्य स्वामिनो दर्शितविषयस्येति चित्तविशेषणं दृशिस्वरूपाय

स्वामिने दर्शितो विषयो येन तस्येत्यर्थः । उक्तमेव विवृणोति । स्वस्मिन्निति । स्वस्मिंश्चित्ते पुरुषार्थरूपेण दृश्ये शब्दादिवृत्तौ सत्त्वपुरुषान्यतावृत्तौ च सति यो दर्शनाभावश्चित्तवृत्त्यभाव इत्यर्थः । मोक्षकालीनं दर्शनाभावं व्यावर्त्तयितुं सत्यन्तम् । संयोगाहेतुतया तु तादृशमदर्शनं नात्र विचारणीयं चित्ते हि पुरुषार्थसत्तायामेव अदर्शनं संयोगहेतुर्भवति इति भावः । व्यर्थतया द्वितीयविकल्पस्य विशेष्यभागपरित्यागमात्रेण तृतीयं विकल्पमाह । किमर्थवत्तेति । सल्कार्य्यसिद्धेर्भाविभोगापवर्ग-योरव्यपदेश्ययोः स्वकारणेषु गुणेषु अवस्थानमित्यर्थः । चतुर्थं विकल्पमाह । अथ अविद्येति । पञ्चपर्वा अविद्या प्रलयकाले स्व-चित्तेन सह गुणेषु लीना वासनारूपेण स्वाश्रयचित्तस्य उत्पत्ति-वीजमित्यर्थः । तथा च अविद्यावासनैव अदर्शनमिति । अयमेव पक्षः सिद्धान्तो भविष्यति । पञ्चमं विकल्पमाह । किं स्थितीति । प्रधाननिष्ठस्य साम्यपरिणामहेतोः स्थितिसंस्कारस्य क्षये सति गतिसंस्कारस्य महदादिरूपविसदृशपरिणामहेतोरभिव्यक्तिरि-त्यर्थः । तयैव हि प्रकृतिक्षोभद्वारा पुम्प्रकृत्योः संयोगो जन्यते इति । तदुभयसंस्कारसद्भावे मतान्तरं प्रमाणयति । यत्र इद-मिति । स्थित्यै गत्यै इति तादर्थ्ये चतुर्थ्यौ । एवकारौ च तयोः पश्चादध्याहार्य्यौ स्थित्या एव इतिपाठे तु विशेषणे तृतीया इति । तथा च प्रधानं चेत् स्थितिमात्रेण वर्त्तेत तदा विका-राजनकत्वान्न प्रधानं स्यात् मूलकारणत्वं हि प्रधानत्व-मिति । तथा गतिमात्रेण चेद्वर्त्तेत तदा महदादीनामपि प्रकृतिवदेव नित्यत्वापत्त्या किं कस्य मूलं स्यादिति न व्यवहारः सम्भवति अत उभयथा एव स्थितिगतिभ्यामेव प्रधानस्यावस्थानं प्रधानव्यवहारं लभते कार्य्यतया न पुनरन्यथा इत्यर्थः । न केवलं मूलकारण एवायं स्थितिगत्योः कालभेदेन निर्णायको

विचारः किन्तु कल्पितेषु विकाररूपेषु कारणभेदेषु अपि महदादिषु एष चर्चो विचारः समान इति प्रसङ्गादवधारयति नास्तिकानां कुर्वद्रूपतावादमपाकर्त्तुं कारणान्तरेषु अपीति। स च चर्चो यथा मृदादिकं यदि स्थित्यैव निवृत्त्यैव वर्त्तेत तर्हि कदापि घटानुत्पादनेन कारणत्वहानिः। यदि गत्यैव प्रवृत्त्यैव वर्त्तेत तदा मृद्घटयोर्द्वयोरेव तुल्यकालतया कार्य्यकारणव्यवस्थानुपपत्तिरतो विकाररूपकारणमपि स्थितिगत्युभयवदेवेति षष्ठविकल्पमाह। दर्शनशक्तिरेवेति। पुरुषायात्मानं दर्शयितुं या क्षमता सा दर्शनशक्तिः सैव च अदर्शनमित्यर्थः। इयञ्च शक्तिर्विवेकख्यात्यनुत्पादरूपा संयोगहेतुस्तथाचोक्तं साङ्ख्यकारिकया।

'दृष्टाहमित्युपरमत्यन्ये'ति।

पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः॥ इति।

द्वितीयविकल्पस्यास्य शब्दादिवृत्त्यनुत्पादस्य त्यागात् अस्य ततोऽभेदः। प्रधानस्य दर्शनशक्तौ श्रुतिं प्रमाणयति। प्रधानस्येति। काललुप्तशाखास्थेयं श्रुतिः। सप्तमं विकल्पमाह। सर्वबोध्येत्यादिना अवभासत इत्यन्तेन। सर्वबोधे समर्थोऽपि पुरुषः प्रधानप्रवृत्तेः प्राक् न पश्यति इत्येकमदर्शनं पुरुषनिष्ठमपरञ्च सर्वकार्य्याणां करणे उत्पादने समर्थं स्वरूपयोग्यमपि दृश्यं प्रधानं तदा प्राक् प्रधानप्रवृत्तेः पुरुषेण न दृश्यत इति दृश्यनिष्ठमदर्शनमित्येवमुभयस्यापि अदर्शनं धर्म इत्येके आहुरित्यर्थः। एतदेव अत्र अदर्शनमिति शेषः। ननु जडानामदर्शनात्मकत्वात् कथं तेषामदर्शनं धर्मः स्यात् अभावस्याधिकरणस्वरूपत्वात् अव्यभिचारेण लाघवात् एकतासिद्धेश्च कथं वा दृशिस्वरूपस्य पुरुषस्य

अदर्शनं घटते प्रकाशरूपस्याप्रकाशरूपत्वासम्भवात् इति आशङ्क्य समाधत्ते। तत्रेदमिति। तत्र अदर्शनद्वयमध्ये इदमेकमदर्शनं दृश्यस्वरूपभूतमपि दृश्यधर्मत्वेन विशिष्टं भवति तत्र हेतुः पुरुषप्रत्ययापेक्षमिति। पुरुषप्रत्ययं बोधमपेक्ष्य तदविषयतयेति यावत्। तथेति। तथा पुरुषस्य निर्धर्मत्वात् सदा प्रकाशरूपत्वात् च अनात्मभूतमपि अदर्शनं पुरुषधर्मत्वेनैव लौकिकबुद्ध्या अवभासते तत्र हेतुः दृश्यप्रत्ययापेक्षमिति। दृश्यप्रत्ययमपेक्ष्य दृश्यगोचरप्रत्ययाभावेनेति यावत्। अष्टमविकल्पमाह। दर्शनं ज्ञानमिति। ज्ञानं वासनारूपं तस्यापि दृश्यसंयोगहेतुत्वात् न तु भोगापवर्गरूपमनागतावस्थं दर्शनमत्रोक्तम् अर्थवत्तया पौनरुक्त्यादिति। उपसंहरति। इत्येत इति। शास्त्रेषु एते अज्ञानभेदास्तान्त्रिकैरुच्यन्त इत्यर्थः। संयोगभेदेन सर्वेषामेव अदर्शनानां हेतुत्वं सिद्धान्तयन्नेव संयोगविशेषहेत्वदर्शनविशेषपरतया उत्तरसूत्रमवतारयति। तत्र विकल्पेति। तत्र अदर्शने विकल्पबहुत्वं भेदबाहुल्यमेतत्पुरुषसामान्यस्य गुणसामान्यस्य च पुरुषार्थहेतुसंयोगसामान्यं प्रति कारणतायां बोध्यम्। यस्तु प्रत्येकचेतनस्य तत्तच्चेतनस्य स्वबुद्धिसंयोगो हेयहेतुः स्वस्वामीत्यादिप्रकृतसूत्रेणोक्तः तस्य हेतुरविद्या चतुर्थविकल्परूपमदर्शनमेवेति सूत्रेण सहान्वयः। प्रत्यक्चेतनस्येति पाठे स्वस्वबुद्ध्यनुगमशीलचेतनस्येत्यर्थः। अयं भावः। अविद्याक्षयोत्तरमपि जीवन्मुक्तस्य भोगार्थं विषयरूपेण परिणतैर्गुणैः सह संयोग उत्पद्यते अतो न अविद्या गुणपुरुषसंयोगसामान्ये हेतुः किन्तु यथोक्तो गुणाधिकारादिरेव स्वबुद्धिसंयोगस्तु जन्मापरनामा अविद्यां विना न भवतीति बुद्धिपुरुषसंयोग एव असाधारण्येन अविद्याहेतुर्भवति सैव च बुद्धिसंयोगद्वारा द्रष्टृदृश्यसंयोगहेतुर्विद्योच्छेद्या च भवतीत्याशयेन सैवोत्तरसूत्रेण सूच्यते

न गुणाधिकारादिः तस्य ज्ञानानुच्छेद्यत्वात् एकस्य पुंसो मुक्तावपि पुरुषान्तरार्थं गुणाधिकारादितादवस्थ्यात् यदेव च पुरुषेण छेत्तुं शक्यते तदेव हेयनिदानमत्र प्रतिपादनीयम् अन्यथा कालकर्मेश्वरादीनामपि हेयहेतुसंयोगकारणतया तेषामप्यत्र प्रतिपाद्यतापत्तेरिति ॥ २३ ॥

यस्तु प्रत्यक्चेतनस्य स्वबुद्धिसंयोगः—

* तस्य हेतुरविद्या ॥ २४ ॥ *

विपर्य्ययज्ञानवासनेत्यर्थः । विपर्य्ययज्ञानवासनावासिता न कार्य्यनिष्ठां पुरुषख्यातिं बुद्धिः प्राप्नोति साधिकारा पुनरावर्त्तते, सा तु पुरुषख्यातिपर्य्यवसाना कार्य्यनिष्ठां प्राप्नोति चरिताधिकारा निवृत्तादर्शना बन्धकारणाभावान्न पुनरावर्त्तते । अत्र कश्चित् षण्डकोपाख्यानेनोद्घाटयति मुग्धया भार्य्यया अभिधीयते षण्डक ! आर्य्यपुत्र ! अपत्यवती मे भगिनी किमर्थं नाहमिति, स तामाह मृतस्ते अहमपत्यमुत्पादयिष्यामीति, तथेदं विद्यमानं ज्ञानं चित्तनिवृत्तिं न करोति विनष्टं करिष्यतीति का प्रत्याशा, तत्राचार्य्यदेशीयो वक्ति ननु बुद्धिनिवृत्तिरेव मोक्षः, अदर्शनकारणाभावाद् बुद्धिनिवृत्तिः, तच्चादर्शनं बन्धकारणं दर्शनान्निवर्त्तते । तत्र

**चित्तनिवृत्तिरेव मोक्षः, किमर्थमस्थान एवास्य मतिविभ्रमः ॥ २४ ॥**

तस्य द्रष्टृदृश्यसंयोगस्य बुद्धिपुरुषसंयोगद्वारा हेतुरविद्ये-त्यर्थः। भाष्यकारेण च सूत्रकारतात्पर्य्याभिप्रायेणैव तस्येत्यस्य बुद्धिसंयोगस्येत्यर्थ उक्तः न तु साक्षादेव द्रष्टृदृश्यसामान्यसंयो-गस्यैव पूर्वसूत्रे प्रकृतत्वात्। बुद्धिसंयोगस्येति। अविद्या चात्र अनात्मनि आत्मबुद्धिमात्रं तस्य न बुद्धिसंयोगहेतुत्वात् अनि-त्यादौ नित्यादिबुद्धिरूपाणामविद्यानां वक्ष्यमाणविवेकख्यातिना-श्यत्वानुपपत्तेश्च। सा च अविद्या बुद्धिसंयोगजन्यतया तदव्यव-हितप्राक्काले न सम्भवतीत्यत आह भाष्यकारो विपर्य्ययेति। सर्गान्तरीयाविद्यायाः स्वचित्तेन सह निरुद्धायाः प्रधाने या वासना स्थिता तया वासितं प्रधानं तत्पुरुषसंयोगिनीं तादृशी-मेव बुद्धिं सृजतीत्यनादित्वान्न दोषः। अविद्यावासनायां बुद्धि-पुरुषसंयोगहेतुत्वे युक्तिमाह। विपर्य्ययेति। विपर्य्ययज्ञानवास-नाबलात् पुरुषख्यातिरूपां कार्य्यनिष्ठां स्वकर्त्तव्यचरमावधिं न प्राप्नोति बुद्धिरतः साधिकारतया पुनरावर्त्तते पुरुषेण संयुज्यते सा तु बुद्धिः पुरुषान्यताख्यातिपर्य्यन्ता सती कार्य्यसमाप्तिं प्राप्नोति परवैराग्योत्पादात्। ततश्च चरिताधिकारा निष्पादितकार्य्या निवृत्ताविद्या सती संयोगाख्यबन्धस्य कारणाभावात् न पुनः पुरुषेण संयुज्यत इत्यर्थः। तथा चान्वयव्यतिरेकाभ्यां विपर्य्यय-वासना बुद्धिपुरुषसंयोगहेतुरिति भावः। पुरुषख्यात्या चित्तस्य निवृत्तिरिति यदुक्तं तत्र नास्तिकाक्षेपं निराचिकीर्षुस्तं प्रदर्श-यति। अत्र कश्चिदिति। पण्डकोपाख्यानेन दृष्टान्तेनोद्घाटयति आक्षिपतीत्यर्थः। नपुंसकाख्यानमेवाह। मुग्धयेत्यादिना उत्पा-दयिष्यतीत्यन्तेन। स पण्डकस्तां भार्य्याम्। विनष्टमिति। वि-

नष्टे परवैराग्येण निरुद्धं ज्ञानं चित्तनिवृत्तिरूपं मोक्षं करिष्यतीति नास्ति प्रत्याशेत्यर्थः। उपेक्षासूचनाय पूर्वाचार्य्यमुखेन अत्र सिद्धान्तमाह। तत्रेति। ईषदसमाप्त आचार्य्य आचार्य्यदेशीयः। उपेक्षणीये प्रत्युत्तरदानमात्रेण आचार्य्यदेशीयत्वम्। आचार्य्यश्च वायौ प्रोक्तः।

आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि।
स्वयमारभते यस्मादाचार्य्यस्तेन चोच्यते॥

इति। नन्विति सम्बोधने। तदुक्तं भवति। ज्ञानं न साक्षान्मोक्षहेतुरस्माभिरिष्यते किन्तु अविद्याख्यादर्शननिवृत्तितत्कार्य्यनिरोधयोगद्वारा। तथा च विनष्टमपि ज्ञानं बुद्धिपुरुषवियोगरूपमोक्षव्यापारद्वारा कारणं सम्भवत्येवेति। ननु यद्ययमाचार्य्यदेशीयः तर्हि किं बुद्धिचित्तादिनामकान्तःकरणनिवृत्तिर्मोक्ष एव न भवतीत्याशङ्कायामाह। तत्र चित्तेति। चित्तनिवृत्तिर्मोक्षो भवत्येव किन्तु तत्रास्थान एव अस्य नास्तिकस्य बुद्धिव्यामोहो व्यर्थ इत्यतोऽत्र उपेक्षणीये समाधानत्वादेव आचार्य्यदेशीय उक्त इत्यर्थः। तदेवं हेयहेयहेतुरूपं व्यूहद्वयं व्याख्याय तृतीयव्यूहस्य सूत्रमवतारयति। हेयमिति। निमित्तमविद्या॥ २४॥

हेयं दुःखं हेयकारणं च संयोगाख्यं स निमित्तमुक्तमतःपरं हानं वक्तव्यम्।

*** तदभावात् संयोगाभावो हानं तद् दृशेः कैवल्यम्॥ २५॥ ***

तस्य अदर्शनस्याभावाद् बुद्धिपुरुषसंयोगाभावः आत्यन्तिको बन्धनोपरम इत्यर्थः, एतद्

**हानं, तद् दृशेः कैवल्यं पुरुषस्यामिश्रीभावः, पुनरसंयोगो गुणैरित्यर्थः । दुःखकारणनिवृत्तौ दुःखोपरमो हानं, तदा स्वरूपप्रतिष्ठः पुरुष इत्युक्तम् ॥ २५ ॥**

तस्या अविद्याया अभावात् विनाशात् बुद्धिपुरुषसंयोगनिवृत्तिद्वारा द्रष्टृदृश्यसंयोगनिवृत्तिः दुःखहानमित्युच्यते कार्य्यकारणयोरभेदोपचारात् तस्य पुरुषार्थत्वायोक्तं तद्दृशेः कैवल्यमिति, तदेव च हानं पुरुषस्य कैवल्यमित्यपि उच्यत इत्यर्थः । इममेव सूत्रार्थं भाष्यकारः प्रकारान्तरेणाह । तस्येति । बुद्धिपुरुषसंयोगशब्देन कार्य्यकारणाभेदात् द्रष्टृदृश्यसंयोगोऽपि ग्राह्यः प्रलयकालीनवियोगव्यावर्त्तनायात्यन्तिक इति विशेषणं बन्धनोपरमस्य । एतद्धानमिति । पूर्वेण सहान्वेति । तद्दृशेः कैवल्यमित्येतद्व्याचष्टे । तद्दृशेरिति । तद्धानं गुणैः बुद्धिगुणैः दुःखादिभिः पुनरसंयोगः प्रतिविम्बरूपेण असम्बन्ध इत्यर्थः । स एव च दुःखभोगनिवृत्तिरूपः स्वतः पुरुषार्थरूप इति भावः । सूत्रस्य फलितार्थमाह । दुःखेति हानमित्यन्तेन । व्याख्याते कैवल्यशब्दार्थे 'तदा द्रष्टुः स्वरूपेऽवस्थान'मिति गतसूत्रं प्रमाणयति । तदेति । तदा दुःखनिवृत्तौ । अस्य च हानव्यूहस्य चतुर्थपादे विस्तरो भविष्यतीति अत्र दिङ्मात्रेण स उक्तः । अतः परं हानोपायव्यूहश्चतुर्थपादस्यापि कियत्पर्य्यन्तं वाच्यस्तत्र चतुर्थव्यूहप्रतिपादनसूत्रमवतारयति । अथेति । बुद्धिसंयोगनिवृत्तिरेव साक्षाद्दुःखहाने कारणं विवेकख्यातिस्तु बुद्धिसंयोगहेत्वविद्यानिवर्त्तकत्वेन परम्परया इति प्राप्तिशब्देन सूचितम् ॥ २५ ॥

**अथ हानस्य कः प्राप्त्युपाय इति ।**

* विवेकख्यातिरविप्लवा हानोपायः ॥ २६ ॥ *

सत्त्वपुरुषान्यताप्रत्ययो विवेकख्यातिः, सा तु अनिवृत्तमिथ्याज्ञाना प्लवते, यदा मिथ्याज्ञानं दग्धवीजभावं बन्ध्यप्रसवं सम्पद्यते तदा विधूतक्लेशरजसः सत्त्वस्य परे वैशारद्ये परस्यां वशीकारसंज्ञायां वर्त्तमानस्य विवेकप्रत्ययप्रवाहो निर्मलो भवति, सा विवेकख्यातिरविप्लवा हानस्योपायः, ततो मिथ्याज्ञानस्य दग्धवीजभावोपगमः पुनश्चाप्रसवः, इत्येष मोक्षस्य मार्गो हानस्योपाय इति ॥ २६ ॥

साक्षात्कारनिष्ठारूपत्वलाभाय अविप्लवेति विशेषणम्। तत्र अविप्लवशब्दात् कथमेतल्लभ्यते इत्याकाङ्क्षायामाह। प्लवते। मिथ्याज्ञानसंस्कारवशात् मिथ्याज्ञानेन अन्तरान्तरा अभिभूयत इत्यर्थः। यदेति। यदा तु साक्षात्कारदशायां सूक्ष्ममिथ्याज्ञानमनागतावस्थं दग्धवीजतुल्यावस्थं तस्य विवरणं बन्ध्यप्रसवं बन्ध्यप्रसवसामर्थ्यं भवति तदा विधूतक्लेशाख्यधूलेर्बुद्धिसत्त्वस्य अतएव परवैशारद्ये वैलक्षण्ये अस्यैव विवरणं परस्यां वशीकारसंज्ञायां 'परमाणुपरममहत्त्वान्तोऽस्य वशीकार' इति सूत्रोक्तायामिच्छाप्रतिघातरूपायां वर्त्तमानस्य विवेकख्यातिप्रवाहो निर्मलो मिथ्याज्ञानाकलुषितो भवति अतः सा विवेकख्यातिरविप्लवा उच्यते। सा परमसाक्षात्काररूपिणी हानोपाय इत्यर्थः। केन द्वारेण हानोपाय इत्याकाङ्क्षायामाह। तत इति। ततो विवेकख्यातेः कारणात् मिथ्याज्ञानस्य सूक्ष्मरूपस्य दग्धवीजताप्राप्तिः।

ततश्च पुनरप्रसव इति कृत्वा एष विवेकख्यातिरूपश्चित्तनिवृत्त्या-दिरूपमोक्षस्य पन्थाः, अस्य विवरणं हानोपाय इत्यर्थः। ननु एवं ज्ञानादेव दुःखहानाख्यमोक्षवचनात् असम्प्रज्ञातयोगस्य किं प्रयोजनमिति चेन्न। परवैराग्यजासम्प्रज्ञातयोगस्याप्यत्र ज्ञानद्वारतया मोक्षहेतुत्वाशयादिति। तस्या विवेकख्यातेरवि-प्लवाख्यनिष्ठाया लक्षणमाह॥ २६॥

* तस्य सप्तधा प्रान्तभूमिः प्रज्ञा॥ २७॥ *

तस्येति प्रत्युदितख्यातेः प्रत्याम्नायः सप्तधेति अशुद्ध्यावरणमलापगमाच्चित्तस्य प्रत्ययान्तरानु-त्पादे सति सप्तप्रकारैव प्रज्ञा विवेकिनो भवति, तद्यथा परिज्ञातं हेयं नास्य पुनः परिज्ञेयमस्ति। क्षीणा हेयहेतवो न पुनरेतेषां क्षेतव्यमस्ति। साक्षात्कृतं निरोधसमाधिना हानम्। भावितो विवेकख्यातिरूपो हानोपायः। इत्येषा चतुष्टयी कार्य्या विमुक्तिः प्रज्ञायाः। चित्तविमुक्तिस्तु त्रयी चरिताधिकारा बुद्धिः। गुणा गिरिशिखरकूट-च्युता इव ग्रावाणो निरवस्थानाः स्वकारणे प्रलयाभिमुखाः सह तेनास्तं गच्छन्ति, न चैषां विप्रलीनानां पुनरस्त्युत्पादः प्रयोजनाभावा-दिति। एतस्यामवस्थायां गुणसम्बन्धातीतः स्वरूपमात्रज्योतिरमलः केवली पुरुष इति। एतां सप्तविधां प्रान्तभूमिप्रज्ञामनुपश्यन् पुरुषः

कुशल इत्याख्यायते, प्रतिप्रसवेऽपि चित्तस्य मुक्तः कुशल इत्येव भवति गुणातीतत्वादिति ॥ २७ ॥

तस्य विवेकख्यातिरूपहानोपायस्य प्रान्तभूमिकारूपिणी प्रज्ञा सप्तधा इत्यर्थः। तदेतद्व्याचष्टे। तस्येतीति। तच्छब्दो-त्हानोपायस्य स्वरूपाख्यानं प्रति उदितख्यातेरिति। अन्यथा तस्येति पुंलिङ्गानुपपत्तेः। प्रत्याम्नायः परामर्शः। न च अत्र प्रत्युत्पन्नख्यातेः पुरुषस्य परामर्श इत्यर्थः सम्भवति पुरुषस्य पूर्वसूत्रेषु अप्रस्तुतत्वात्। सप्तधा इत्येतद्व्याख्यातुं गृह्णाति। सप्तधा इतीति। अशुद्धीति। अशुद्धिविपर्य्ययाख्या अविद्या तत्-कार्य्यपापादिकं चोत्तरसूत्रभाष्यात् सैवावरणरूपो मलस्तदप-गमाच्चित्तस्य प्रत्ययान्तराणां विवकख्यात्यन्येषामनुत्पादे सति परवैराग्यजान्निरोधयोगादुत्थानदशायां सप्ताकारा प्रज्ञा विवे-किनो निष्पन्नज्ञानस्य लिङ्गं भवतीत्यर्थः। एवकारो योगव्यव-च्छेदे प्रकारन्यूनता नास्तीत्यर्थः। एकस्या एव प्रज्ञायाः सप्त-प्रकारत्वमुदाहरति। तद्यथा इत्यादिना। प्रथमं प्रकारमाह। परिज्ञातमिति। परिज्ञातं साक्षात्कृतं मुमुक्षुभिर्ज्ञेयं न अस्याव-शिष्टं पुनर्ज्ञेयमस्तीत्यर्थः। द्वितीयं प्रकारमाह। क्षीणा इति। ततश्च हेयहेतवोऽविद्याकामकर्मादयो विवेकसाक्षात्कारेण मम क्षीणा इत्यादिरर्थः। तृतीयं प्रकारमाह। साक्षात्कृत-मिति। ततश्च अविद्यादिक्षयादुत्पन्नेन निरोधसमाधिना हेतुना व्युत्थानकाले दुःखहानरूपो भाविमोक्षो मया साक्षात्कृतः देह-पातानन्तरमेतादृशो मे मोक्षो भवितेति सजातीयसाक्षात्कार-एव सजातीयान्तरसाक्षात्कारविशेषे परिचितः। सम्प्रज्ञात-योगदृष्टान्तेन कैवल्यमपि दृष्टप्रायमिति फलितार्थः। यथाश्रुति

निरोधसमाधौ ज्ञानसाक्षात्कारानुपपत्तिर्वृत्त्यभावादिति असम्प्रज्ञातकालीनस्य दुःखाभावो योग्यानुपलब्ध्या व्युत्थाने साक्षात् क्रियते, यदि हि असम्प्रज्ञातेऽपि दुःखं स्यात् तदा अनुभूयेत ततश्च सुप्तोत्थान इव व्युत्थाने स्मर्य्येतेति। अथवा निरोधसमाधिना निष्पाद्यं ज्ञानं मोक्षो ज्ञानगोचरसम्प्रज्ञातेन साक्षात्कृतमित्यर्थः। चतुर्थं प्रकारमाह। भावित इति। ततश्च फलनिष्पत्त्या विवेकख्यातिरूपो ज्ञानोपायो भावितो निष्पादितः फलनिष्पत्त्यैव साधनस्य सिद्धेरिति। वस्तुतस्तु भावित इत्यादिप्रकारस्य द्वितीयस्थल एव पाठ आञ्जस्येन क्रमोपपत्तेः। एषेति। एषा प्रान्तभूमिप्रज्ञाया विषयो हेयज्ञानसमाप्त्यादिरूपा चतुष्टयी प्रज्ञायाः प्रज्ञाख्यतत्त्वज्ञाननिमित्तात् पुंसां कार्य्यमुक्तिः कार्य्याद्विमुक्तिः कर्त्तव्यसमाप्तिः जीवन्मुक्तिरित्यर्थः। इयं परवैराग्यरूपा चित्तनाशस्य आद्यभूमिकारूपा। चित्तेति। चित्ताद्विमुक्तिः चित्तविमुक्तिः परममुक्तिः सापि प्रान्तभूमिप्रज्ञाया विषयः त्रिविधा भवति। चित्तविमुक्तिस्तु स्वयमेव भवति न तत्र साधनापेक्षेत्याशयेन पृथगुपन्यासः। तत्राद्यां चित्तविमुक्तिमाह। चरिताधिकारा बुद्धिरिति। समाप्तभोगापवर्गा भवति बुद्धिरित्यर्थः। इयं परवैराग्यरूपा चित्तनाशस्य आद्यभूमिकारूपा। द्वितीयामाह। गुणा इति। बुद्धेर्गुणाः संसारसुखदुःखादयः स्वकारणे सत्त्वादित्रिगुणमयप्रकृतौ लीयमानास्तेन चित्तेन सहात्यन्तलयं गच्छन्ति। तत्र दृष्टान्तो गिरीति। गिरिशिखरकूटात् च्युताः शिला इव अवस्थातुमक्षमा इत्यर्थः। एषा च लिङ्गशरीरस्य विनश्यदवस्था द्वितीयभूमिका। तृतीयामाह। न चैषामिति। न संस्कारसुखादीनां पुनरुद्भवोऽस्ति पुरुषार्थसमाप्त्या प्रयोजनाभावात् इत्यत एतस्यामवस्थायां पुरुषो बुद्ध्यादिगुणसम्बन्धविशेषशून्यः स्वरूपमात्रज्योतिः निर्विषयकचिज्ज्योतिःस्वरूपोऽमल

औपाधिकतमोमालिन्यरहितः केवली केवलेषु मुक्तेषु अविभागो भवतीत्यर्थः। इयं चात्यन्तिकलयनिष्पत्तिरूपा विदेहकैवल्यस्य चरमभूमिका इमां त्रिविधां चित्तभूमिं भाविनीमेव जीवन्मुक्तदशायां विशुद्धचित्तो योगी साक्षात्करोतीति बोध्यम्। तदेवं सप्तविषयत्वात् सप्तप्रकारा प्रज्ञा व्याख्याता। इदानीं सूत्रतात्पर्य्यार्थमाह। एतां सप्तविधामिति। प्रज्ञावानित्यनुक्त्वा प्रज्ञामनुपश्यन्निति निरभिमानताप्रतिपादनायोक्तं, बुद्धिवृत्तिं प्रज्ञां साक्षिभावेनैव जीवन्मुक्तः पश्यति न तु अभिमन्यत इत्याशयः। कुशलः कल्याणोऽकल्याणबुद्धिपत्नीपरित्यागादिति। ज्ञानिनो जीवन्मुक्तस्य लक्षणं सूत्रेणोक्तं तत्प्रसङ्गात् स्वयं परममुक्तस्य ततो विशेषमाह। प्रतिप्रसव इति। चित्तस्यात्यन्तं लयेऽपि कुशल इत्येव भवति सुखदुःखादिभिः सत्त्वादिभिश्च अकुशलगुणैरत्यन्तवियोगादित्यर्थः। एवकारेण जीवन्मुक्तदशायामपि बाधितमकुशलं तिष्ठतीत्युक्तम्। अतएव चाख्यायत इत्यनेन जीवन्मुक्तावस्थायां गौणं कुशलत्वं व्याख्याय अत्र भवतीत्यनेन मुख्यं कुशलत्वमुच्यत इति। यत्तु गीतायां "सर्वारम्भपरित्यागी गुणातीतः स उच्यत" इति ज्ञानिनोऽपि गुणातीतत्वमुक्तं तद्गुणाभिमानशून्यतामात्रं परमेश्वरस्य निर्गुणत्ववदिति। अतः परं शास्त्रसमाप्तिपर्य्यन्तं हानोपायव्यूहस्य अशेषविशेषास्तत्प्रसङ्गेनैव च हानव्यूहस्य विशेषाश्च व्याख्येयाः। तत्रादौ विवेकख्यात्युपायप्रतिपादकं सूत्रजातमवतारयति। सिद्धेति। सिद्धा निष्पन्ना अविप्लवेति यावत्॥ २७॥

सिद्धा भवति विवेकख्यातिर्हानोपायः, न च सिद्धिरन्तरेण साधनमित्येतदारभ्यते।

* योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिरा-विवेकख्यातेः ॥ २८ ॥

योगाङ्गानि अष्टौ अभिधायिष्यमाणानि, तेषामनुष्ठानात् पञ्चपर्वणो विपर्य्ययस्याशुद्धिरूपस्य क्षयः नाशः, तत्क्षये सम्यग्ज्ञानस्याभिव्यक्तिः, यथा यथा च साधनान्यनुष्ठीयन्ते तथा तथा तनुत्व-मशुद्धिरापद्यते, यथा यथा च क्षीयते तथा तथा क्षयक्रमानुरोधिनी ज्ञानस्यापि दीप्तिर्विवर्द्धते, सा खल्वेषा विवृद्धिः प्रकर्षमनुभवति आ विवेक-ख्यातेः आ गुणपुरुषस्वरूपविज्ञानादित्यर्थः । योगाङ्गानुष्ठानमशुद्धेर्वियोगकारणं यथा परशु-श्छेद्यस्य, विवेकख्यातेस्तु प्राप्तिकारणं यथा धर्मः सुखस्य, नान्यथा कारणम् । कति चैतानि कारणानि शास्त्रे भवन्ति । नवैवेत्याह, तद्यथा उत्पत्तिस्थित्यभिव्यक्तिविकारप्रत्ययाप्तयः । वियो-गान्यत्वधृतयः कारणं नवधा स्मृतम् इति । तत्र उत्पत्तिकारणं मनो भवति विज्ञानस्य, स्थिति-कारणं मनसः पुरुषार्थता, शरीरस्येवाहार इति । अभिव्यक्तिकारणं यथा रूपस्यालोक-स्तथा रूपज्ञानम् । विकारकारणं मनसो विष-

यान्तरं, यथाग्निः पाक्यस्य। प्रत्ययकारणं धूमज्ञानमग्निज्ञानस्य। प्राप्तिकारणं योगाङ्गानुष्ठानं विवेकख्यातेः। वियोगकारणं तदेवाशुद्धेः। अन्यत्वकारणं यथा सुवर्णस्य सुवर्णकारः। एवमेकस्य स्त्रीप्रत्ययस्य अविद्या मूढत्वे द्वेषो दुःखत्वे, रागः सुखत्वे, तत्त्वज्ञानं माध्यस्थ्ये। धृतिकारणं शरीरमिन्द्रियाणां तानि च तस्य, महाभूतानि शरीराणां तानि च परस्परं सर्वेषां तैर्य्यग्, यौनमानुषदैवतानि च परस्परार्थत्वात्, इत्येवं नव कारणानि। तानि च यथासम्भवं पदार्थान्तरेष्वपि योज्यानि, योगाङ्गानुष्ठानं तु द्विधैव कारणत्वं लभत इति॥ २८॥

सामान्यतो ज्ञानं श्रवणमननाभ्यामपि भवतीति दीप्तिपदं, दीप्तिश्च अत्राश्रुतामतविशेषग्रहणम्। अत्र योगाङ्गानुष्ठानादित्यनेन वक्ष्यमाणयमादीनां योगाङ्गत्वमपि ज्ञानाङ्गतावदेव विवक्षितम्। अन्यथा "तदपि वहिरङ्गं निर्वीजस्य" इत्यागामिसूत्रे योगाङ्गतायां विशेषस्याप्रकृताभिधानताप्रसङ्गात्। ननु योगाङ्गानि योगसाधनानि तानि च पूर्वोक्ततया पुनर्नाकाङ्क्ष्यन्ते इति चेन्न। कथं व्युत्थितचित्तोऽपि योगयुक्तः स्यादित्यादिभाष्येणैव दत्तोत्तरप्रायत्वात्। पूर्वपादे हि उत्तमाधिकारिणाम् अभ्यासवैराग्ये एव योगयोः साधनमुक्तं ततश्च मध्यमाधिकारिणां तपःस्वाध्यायेश्वरप्रणिधानान्यपि केवलानि एतत्पादस्यादौ

उक्तानि। अतः परं मन्दाधिकारिणां यमादीन्यपि योगसाधनानि वक्तव्यानि ज्ञानसाधनप्रसङ्गेन इति अपौनरुक्त्यम्। यद्यपि ज्ञानमपि असम्प्रज्ञातयोगसाधनतया अस्मिन् शास्त्रे प्रतिपादितं तथापि तद्योगसामान्ये अङ्गं न भवति सम्प्रज्ञाताहेतुत्वात्। अतो योगसामान्यस्य ज्ञानस्य चोभयोरेव तुल्यवदङ्गतया अत्र यमादीनि अष्टौ एव योगाङ्गतया प्रतिपादयिष्यन्त इति। सूत्रं व्याचष्टे। योगाङ्गानीति। विपर्य्ययस्येति। योगाङ्गतया विपर्य्ययशब्देन तत्कार्य्यं पापादिकमपि ग्राह्यं तस्यापि अशुद्धिरूपत्वात्।

ज्ञानमुत्पद्यते पुंसः क्षयात्पापस्य कर्मणः।
यथादर्शतले प्रख्ये पश्यन्त्यात्मानमात्मनि॥

इति स्मृतेः। नाशश्चात्र तनुता। तथा तथा तनुत्वमशुद्धिरापद्यत इत्युत्तरवाक्यात् क्लेशतनूकरणार्थश्चेत्युक्तसूत्राच्च। अतो न ज्ञानेनैव क्लेशानामत्यन्तोच्छेद इति सिद्धान्तव्याघातः। अनुरोधिनी अनुसारिणी दीप्तिः सूक्ष्मग्राहिता। गुणपुरुषेति। गुणास्त्रयः सत्त्वादयः पुरुषश्च जीवेश्वरौ इत्यर्थः। एतेन जिज्ञासामात्रद्वारा यमनियमान्तर्गतसर्वकर्मणां ज्ञानहेतुत्वं जिज्ञासानन्तरञ्च कर्म त्याज्यमनुत्पन्नज्ञानेनापीति वेदान्तिब्रुवाणां मतं दुर्मतं मन्तव्यम्। विपर्य्ययतानवद्वारा यमनियमान्तर्गतकर्मणां ज्ञानहेतुत्वसिद्धेरिति। अतएव

कर्मणा सहिताज् ज्ञानात् सम्यग्योगोऽभिजायते।
ज्ञानञ्च कर्मसहितं जायते दोषवर्जितम्॥

इति कौर्मादिषु कर्मणां ज्ञानसाहित्येनानुष्ठानं सिद्धम्। यद्यपि विषयान्तरसञ्चाराख्यप्रतिबन्धनिवृत्तिरूपतया सम्प्रज्ञातोऽपि ज्ञानकारणं तथापि अशुद्धिक्षयद्वारा योगाङ्गानुष्ठानानामेव ज्ञानदीप्तिहेतुत्वमस्ति न योगस्येति अङ्गपदोपादानमिति। ननु

नानाविधकार्य्यकारणभावदर्शनात् योगाङ्गान्यशुद्धिक्षयं प्रति ज्ञानं प्रति च कीदृशं कारणमित्याकाङ्क्षायामाह। योगाङ्गानुष्ठानमशुद्धेरिति। अशुद्धेः कारणं वियोगरूपेणातिशयेनेत्यर्थः। अयं भावः। सतएव वस्तुनोऽतिशयहेतुः कारणमुच्यते असत्त्वात् तस्यानभ्युपगमात्। तथा च सत्येव अशुद्धिर्वियोगाख्येन अतीतावस्थारूपेणातिशयेन योगाङ्गानां कार्य्येति। एवं दृष्टान्तेऽपि बोध्यम्। विवेकख्यातेस्तु प्राप्तिकारणमिति। प्राप्तिरूपातिशयाधायकतया विवेकख्यातेः कारणमित्यर्थः। प्राप्तिश्चोत्पत्तौ प्रतिबन्धनिवर्त्तनम्। तत्र दृष्टान्तमाह। यथेति। नान्यथाकारणमिति। न वैशेषिकाणामिवोत्पत्तिकारणमस्मन्मते। धर्मादीनां निमित्तकारणानां प्रतिबन्धनिवृत्तिकारणत्वसिद्धान्तादित्याशयः। 'निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवदि'ति सूत्रे चैतत् व्यक्तीभविष्यति। विवेकख्यातेरुत्पत्तौ च चित्तमेव कारणं स्वत एव सर्व्वार्थग्रहणसामर्थ्यादिति। पृच्छति। कति चैतानीति। उत्तरं नवैवेत्याहेति। पूर्वाचार्य्येण इति शेषः। कारिकोक्तानि नव कारणानि। यथोक्तक्रममुदाहरति। तत्रेति। ज्ञानस्य वृत्तिरूपस्योत्पत्तिरूपातिशयेन मनः कारणं सम्भवति उपादानत्वादित्यर्थः। प्राप्तिकारणं च नोत्पत्तौ साक्षात्कारणं किन्तु प्रतिबन्धनिवृत्तिद्वारेति। घटादिषु दण्डादीनि च पूर्वोक्तप्राप्तिकारणमध्य एव प्रवेशनीयानि, उत्पत्तिकारणत्वमुपादानकारणत्वमिति। स्थितीति। भोगापवर्गरूपं पुरुषार्थसामान्यं मनसः स्थितिरूपातिशयेन कारणं भवति पुरुषार्थसमाप्तौ मनसः स्वयमेव लयादित्यर्थः। अत्र प्राधान्येनैव मन उदाहृतं पुरुषार्थस्य सर्वभोग्यानामेव स्थितिहेतुत्वादिति। अभिव्यक्तीति। आलोको रूपज्ञानञ्च रूपस्य अभिव्यक्तिरूपातिशयेन कारणमित्यर्थः। अभिव्यक्तिश्च बुद्धि-

वृत्तिः पौरुषेयबोधस्य तत्र बुद्धिवृत्तौ आलोकः कारणं पौरुषेयबोधे च रूपज्ञानं बुद्धिवृत्तिरूपमिति विभागः । विकारकारणमिति । एकाग्रस्य मनसो विषयान्तरं स्वगोचररागादिविकाररूपातिशयेन कारणं भवतीत्यर्थः । प्रत्ययकारणमिति । प्रत्ययः सम्प्रत्ययः प्रामाण्यनिश्चय इति यावत्, तथा च पर्वते वह्निरस्तीति शब्दादिना यदग्निज्ञानं तस्य सम्प्रत्ययकारणं पर्वते धूमदर्शनमित्यर्थः । यथाश्रुतेऽग्निज्ञानस्येत्यत्र ज्ञानशब्दवैयर्थ्यात् । आनुमानिकज्ञानस्यापि अभिव्यक्तिमध्य एव प्रवेशाच्च । प्राप्तिकारणमिति । आप्तिः प्राप्तिरित्येक एवार्थः, एतद्व्याख्यातम् । वियोगेति । एतदपि व्याख्यातम् । ननु वियोगकारणे कारणव्यवहार एव नास्तीति चेन्न । मशकार्थोऽयं धूम इत्यादिव्यवहारदर्शनात् । कर्मकार्य्ययोरेकार्थतया अशेषधातुकर्मणामिव कार्य्यत्वाच्चेति । अन्यत्वकारणमिति । रूपभेदकारणमित्यर्थः । ननु विकारकारणात् अस्य को भेद इति चेत्, उच्यते । सुवर्णादेः कटकादिरूपतात्यागेन कुण्डलादिरूपतायां यत्कारणं तत्सुवर्णादेर्विकारकारणमुच्यते तदेव च कारणं कटकादेरन्यत्वकारणमुच्यते कटकादिविनाशपूर्वकमन्येषां कुण्डलादीनामुत्पादनात् अतः कार्य्यभेदेन एकस्यैव वस्तुनो द्विधा कारणत्वमिति । सुवर्णस्येति । सुवर्णपिण्डादेरित्यर्थः । सुवर्णस्य सर्वविकारानुगतत्वेन सुवर्णान्यत्वाकारणत्वात् । अतोऽस्य विकारकारणात् भेदः सुवर्णपिण्डं कुण्डलं करोति इत्यादिप्रत्ययश्च अस्यां कारणतायां प्रमाणमिति । बाह्यमन्यत्वकारणमुदाहृत्य आन्तरमपि अन्यत्वकारणमुदाहरति । एवमेकस्येति । स्त्रीप्रत्ययस्य स्त्र्याकारपरिणतबुद्धिद्रव्यस्य वृत्त्याख्यस्य एकस्यैकजातीयस्य मूढ़त्वादिधर्म्माणामन्यत्वे भिन्नत्वे अविद्यादिचतुष्टयं कारणमित्यर्थः । तत्र मोहः कर्त्तव्याकर्त्तव्यशून्यता दुःखत्वसुखत्वे दुःखित्वसुखित्वे

माध्यस्थ्यं रागद्वेषमोहशून्यता। धृतिकारणमिति। शरीर-मिन्द्रियाणाम् आश्रयविधया धारकं तानि चेन्द्रियाणि तस्य शरीरस्य योगक्षेमनिर्वाहकत्वेन धारकाणि। एवं पृथिव्यादीनि महाभूतानि आधारतयैव शरीराणां धारकाणि। तानि च पर-स्परं सर्वेषामिति। तानि च महाभूतानि अन्योन्यं सर्वेषां सर्वाणि धारकाणि आकाशं वायोर्धारकं चक्रवात्या च छिद्राकाशस्य धारिका छिद्रस्य तत्तन्मत्वात् तदाश्रितत्वाच्च। एवं वायुस्ते-जसो धारकः तेजश्च आवरणादिरूपमण्डान्तर्वर्त्तिवायूनां धार-कमित्यादिरूपेण व्याख्येयम्। तथा तैर्य्यग्यौनमानुषदैवतानि च शरीराणि परस्परं धारकाणि आश्रयाश्रयिभावाभावेऽपि यज्ञवृष्ट्यादिभिरन्योन्यमुपकारकत्वात्। 'देवान् भावयतानेन ते देवा भावयन्तु वः' इत्यादिभ्य इत्यर्थः। अथैवं स्थितिकारणात् धृतिकारणस्य कथं भेद इति, उच्यते। कार्य्यानुप्रवेशाप्रवेशा-भ्याम् अवान्तरभेदात् स्थितिहेतुर्हि पुरुषार्थाहारादिर्मतः शरी-राद्यविभक्तः सन्नेव तानि स्थापयति धृतिहेतुश्च शरीरादिरि-न्द्रियादीन् अननुप्रविश्यैव तानि धारयतीति महान् विशेष इति। उपसंहरति। इत्येवमिति। यथायोग्यमेभिरेव कार-णत्वैरविद्याकर्मजीवेश्वरादीनां सर्वकारणत्वप्रतिपादिकाः श्रुति-स्मृतयो व्याख्येया इत्याशयवान् आह। तानि च यथासम्भव-मिति। आधुनिकास्तु उत्पाद्यविकार्य्याप्यसंस्काररूपैश्चतुर्विधं कार्य्यमाहुः। तैस्तु नवानामेव कार्य्याणां चतुर्धा विभागः कृत इति। प्रकृतमुपसंहरति। योगाङ्गेति। सूत्रान्तरमवतार-यति। तत्रेति॥ २८॥

तत्र योगाङ्गानि अवधार्य्यन्ते—

*** यमनियमासनप्राणायामप्रत्याहारधारणा-ध्यानसमाधयोऽष्टावङ्गानि ॥ २९ ॥ ***

**यथाक्रममेतेषामनुष्ठानं स्वरूपं च वक्ष्यामः ॥ २९ ॥**

पूर्वपादोक्तानि अन्तरङ्गानि अभ्यासवैराग्यश्रद्धाप्राणायामादीनि अस्य पादस्यादौ उक्तानि मध्यमसाधनानि तपःस्वाध्यायेश्वरप्रणिधानानि अत्यन्तवहिरङ्गैरनुक्तसाधनैः सह पिण्डीकृत्य योगज्ञानोभयसाधनतया अत्रोच्यन्त इति अपौनरुक्त्यम्। क्रियासाधननिरूपणं तु उत्तममध्यमाधमाधिकारभेदात्। तत्र वैराग्यस्य सन्तोषे प्रवेशः श्रद्धादीनां च तप-आदिषु परिकर्मणाञ्च धारणादित्रिक इति श्रवणमननयोश्च प्रमाणविधयैव ज्ञानहेतुत्वं साक्षादस्तीत्याशयेन अशुद्धिक्षयद्वारकेषु ज्ञानसाधनेषु न ते परिगणिते इति मन्तव्यम्। भाष्ये यथाक्रममेषामनुष्ठानमिति-कर्त्तव्यमिति शेषः। अयं तूत्सर्ग एव ईश्वरप्रसादाज्जितोत्तरभूमिकस्य नाधरभूमिषु विनियोग इति भाष्ये वक्तव्यत्वात्। अन्यथा वहिरङ्गान्तरङ्गविभागप्रतिपादनवैयर्थ्यापत्तेश्चेति। उत्तरसूत्रजातमवतारयति। स्वरूपं चेति। स्वरूपञ्च यथाक्रममेषामतः परं वक्ष्याम इत्यर्थः॥ २९ ॥

*** अहिंसासत्यमस्तेयब्रह्मचर्य्यापरिग्रहा यमाः ॥ ३० ॥**

**तत्राहिंसा सर्वथा सर्वदा सर्वभूतानामनभिद्रोहः, उत्तरे च यमनियमास्तन्मूलास्तत्सिद्धिपरतया तत्प्रतिपादनाय प्रतिपाद्यन्ते,**

तदवदातरूपकरणायैवोपादीयन्ते । तथा च उक्तं स खल्वयं ब्राह्मणो यथा यथा व्रतानि बहूनि समादित्सते तथा तथा प्रमादकृतेभ्यो हिंसा-निदानेभ्यो निवर्त्तमानस्तामेव अवदातरूपामहिंसां करोति सत्यं यथार्थे वाङ्मनसे, यथा दृष्टं यथा अनुमितं यथा श्रुतं तथा वाङ्मनश्चेति, परत्र स्वबोधसंक्रान्तये वागुक्ता सा यदि न वञ्चिता भ्रान्ता वा प्रतिपत्तिवन्ध्या वा भवेदिति, एषा सर्वभूतोपकारार्थं प्रवृत्ता न भूतोपघाताय, यदि च एवमप्यभिधीयमाना भूतोपघातपरैव स्यान्न सत्यं भवेत्, पापमेव भवेत्, तेन पुण्याभासेन पुण्यप्रतिरूपकेण कष्टतमं प्राप्नुयात्, तस्मात् परीक्ष्य सर्वभूतहितं सत्यं ब्रूयात् । स्तेयम् अ-शास्त्रपूर्वकं द्रव्याणां परतः स्वीकरणं, तत्प्रति-षेधः पुनरस्पृहारूपमस्तेयमिति । ब्रह्मचर्य्यं गुप्तेन्द्रियस्य उपस्थस्य संयमः । विषयाणामर्जन-रक्षणक्षयसङ्गहिंसादोषदर्शनात् अस्वीकरणमपरिग्रह, इत्येते यमाः ॥ ३० ॥

योगाङ्गभूतां प्रकृष्टामहिंसां लक्षयति । तत्र अहिंसा सर्वथेति । आश्रमविहितनित्यकर्माविरोधेनेति विशेषणीया शौचादिषु क्षुद्रजन्तुहिंसाया अपरिहार्य्यत्वात् । अतएव योगिनां

प्राणायामादिकं तत्पापक्षालनाय नित्यतया शास्त्रे विहितमिति। अहिंसाया अविरोधेनैव सत्यादयो यमनियमा अनुष्ठेया इति प्रतिपादनाय तस्याः श्रेष्ठत्वमाह। उत्तरे चेति। तन्मूला इति। सैव मूलं प्रयोजनं येषामिति विग्रहः। अतो हिंसासिद्धिपरतयैव शास्त्रेषु इतरयमनियमाः प्रतिपाद्यन्त इति तत्सिद्धिपरतयैवेत्यस्य विवरणम्। तत्प्रतिपादनायेति। सत्यादिभिरहिंसा सिध्यतीति प्रतिपादनायेति तस्यार्थः। तथा तदवदातरूपकरणाय अहिंसा निर्मलीकरणायैव योगिभिरुपादीयन्तेऽनुष्ठीयन्ते चेत्यर्थः। शौचतप आद्यकरणे च नरकादिना हिंसापि अन्ततोऽस्तीति मन्तव्यम्। तथा चेत्यादि, सुगमम्। तथा मोक्षधर्मेऽप्युक्तम्

यथा नागपदेऽन्यानि पदानि पदगामिनाम्।
सर्वाण्येवापि धीयन्ते पदजातानि कौञ्जरे॥
एवं सर्वमहिंसायां धर्मार्थमपि धीयते।

इति। सत्यं लक्षयति। सत्यमिति। यथार्थत्वं व्याचष्टे। यथा दृष्टमिति। दर्शनादीनां प्रमात्वमपि विवक्षितम्। भ्रान्तौ इति वक्ष्यमाणत्वात्। अज्ञाननिमित्तकपापान्तरवत् भ्रान्तिनिमित्तका सत्यस्यापि पापत्वौचित्यात्। मनश्चेति। मनश्च तथा तात्पर्य्ययुक्तमित्यर्थः। तेन यदा दृष्टादिविपरीतार्थबोधने तात्पर्य्यं तदा यथार्था वागसत्यैव भवति यथा अश्वत्थामा हत इति युधिष्ठिरवाक्यं, तत्र हि गजविषये वाक्यस्य सत्यत्वेऽपि मनसो न सत्यत्वं दृष्टविपरीतद्रोणपुत्रहनने तात्पर्य्यादिति। सत्यस्य उदाहरणं सामान्यत आह। परत्र इत्यादिना इतीत्यन्तेन। इतिशब्दात् पूर्वं तदा सत्यमिति पूरणीयम्। स्वविमोदाय गीतावाक्यादीनां परप्रतिपत्तिवन्ध्यत्वादौ अपि न असत्यत्वमित्यतस्तद्व्यावर्त्तनार्थं परत्र स्वबोधसंक्रान्तये इत्यु-

क्तम्। वञ्चिता विपरीतार्थबोधनेच्छया प्रयुक्ता भ्रान्ता भ्रमेण प्रयुक्ता प्रतिपत्तिवन्ध्या अप्रसिद्धपदादिभिर्न बोधजननक्षमेत्यर्थः। यथोक्तसत्यलक्षणे लोकहितत्वमपि विशेषणं देयमित्याह। एषेति। एषा वाक् प्रवृत्ता ब्रह्मणा निर्मिता। अतो यदि च, एवमपि यथार्थापि, अभिधीयमाना उच्चार्य्यमाणेत्यादिरर्थः। सा च वाक् यथा दस्युभिः सार्थगमनं पृष्टस्य सार्थगमनाभिधानम् इत्यादिरूपा, पुण्याभासेन पुण्यवत्प्रतीयमानेन। तत्र हेतुः पुण्यप्रतिरूपकेणेति पुण्यसदृशेनेत्यर्थः। कष्टं दुःखात्मकं तमो नरकमित्यर्थः। सत्यं यथार्थं ब्रूयादित्यर्थः। अत्र च असत्यनिवृत्तिमात्रं सत्यशब्देन विवक्षितं तस्यैव तत्त्वसम्भवा अन्यथा असत्यस्य वचनेऽपि यमप्रसङ्गाच्चेति। अस्तेयं लक्षयितुमभावस्य प्रतियोगिनिरूपणाधीननिरूपणतयादौ स्तेयं लक्षयति। स्तेयमिति। प्रतिग्रहव्यावर्त्तनायाशास्त्रपूर्वकमिति। अत्र चौर्य्येणापि स्वत्वं जायत इति अवगम्यते। अथ वा स्वीकरणं ममेति बुद्धिमात्रं भ्रमसाधारणमिति तत्प्रतिषेधस्तन्निवृत्तिस्तयापि अस्पृहामुपलक्षयित्वाह। अस्पृहारूप इति। ब्रह्मचर्य्यं लक्षयति। गुप्तेति। गुप्तेन्द्रियस्येति स्वोक्तस्य विवरणमुपस्थस्येति। संयम इति अत्रोपसर्गेण अन्येन्द्रियसाहित्यमुपस्थस्य ग्राह्यं तेनोपस्थस्य विषये सर्वेन्द्रियव्यापारोपरम इति लक्षणम्। तथा चोक्तं दक्षसंहितायाम्।

ब्रह्मचर्य्यं सदा रक्षेदष्टधा लक्षणं पृथक्।
स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्॥
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः॥

इति। प्रकृष्टमीक्षणं प्रेक्षणं रागपूर्वकं दर्शनमित्यर्थः। अपरिग्रहं लक्षयति। विषयाणामिति। परिग्रहे हिंसाद्या अपि

दोषास्तेषां दर्शनादिति विशेषणं दम्भाशक्त्यादिनिमित्तकास्वीकरणेऽतिव्याप्तिनिरासाय इति । हिंसा च अत्र दाढ्यप्रभृतीनां बोध्या । उक्तानां यमानां विशेषप्रतिपादकं सूत्रं पूरयित्वा पठति । ते त्विति ॥ ३० ॥

ते तु—

* जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् ॥ ३१ ॥ *

तत्र अहिंसा जात्यवच्छिन्ना मत्स्यबन्धकस्य मत्स्येषु एव नान्यत्र हिंसा, सैव देशावच्छिन्ना न तीर्थे हनिष्यामीति, सैव कालावच्छिन्ना न चतुर्दश्यां न पुण्येऽहनि हनिष्यामीति, सैव त्रिभिरुपरतस्य समयावच्छिन्ना देवब्राह्मणार्थे नान्यथा हनिष्यामीति, यथा च क्षत्रियाणां युद्ध एव हिंसा नान्यत्रेति । एभिर्जातिदेशकालसमयैः अनवच्छिन्ना अहिंसादयः सर्वथा एव परिपालनीया, सर्वभूमिषु सर्वविषयेषु, सर्वथा एव अविदितव्यभिचाराः सार्वभौमा महाव्रतमित्युच्यते ॥ ३१ ॥

समयः सङ्केतो वक्ष्यमाणनियमविशेष इति यावत् । जात्यादिभिश्चतुर्भिरनवच्छिन्नास्ते यमाः सार्वभौमाः सर्वासु अवस्थासु अनुगता अतो महाव्रतमितिसंज्ञिता इत्यर्थः । अन्वर्थसंज्ञायाः फलञ्च प्रकृष्टयोगिभिरेवमनुष्ठानमिति । मुख्यमहिंसाख्यम-

माश्रित्य जात्यवच्छिन्नादीन् व्याचष्टे। तत्र अहिंसेति। जाति-र्मत्स्यत्वादिः तया परम्परया अवच्छिन्ना मत्स्याद्यतिरिक्तस्य अहिंसेत्यर्थः। एवमुत्तरासु अपि परम्परया एवावच्छिन्नत्वं बोध्यम्। सैव देशेति। सैव अहिंसैव एवमुत्तरयोरपि। त्रिभि-रुपरतस्येति। साङ्कर्य्यनिरासायोक्तम्। त्रिभिर्जात्याद्यवच्छेदैः परम्परया शून्यस्य पुरुषस्येत्यर्थः। समयावच्छिन्नस्य उदाहरण-द्वयमाह। देवेति। यथा चेति। यथा वेत्यर्थः। अहिंसाया इव अन्येषामपि यमानां जात्याद्यवच्छिन्नत्वमूहनीयमित्याशयः। सूत्रतात्पर्य्यार्थमाह। एभिरिति। सार्वभौमशब्दस्यार्थमाह। सर्वभूमिषु इति। सर्वभूमिषु इत्यस्य विवरणं सर्वविषयेषु इति। विषया जात्यादयो यथोक्ताः। अस्यापि विवरणं सर्वथैव इत्यादि। ननु कुशसमिदाहरणादिवैधहिंसानामपि परित्यागे नित्यकर्म-बाधेन प्रत्यवायापत्तिरिति, मैवम्।

सर्वाणि भूतानि सुखे रमन्ते सर्वाणि दुःखेषु तथोद्विजन्ति।
तेषां भयोत्पादनजातखेदः कुर्य्यान्न कर्माणि हि जातवेदः॥

इति मोक्षधर्मादिवाक्यैर्जातवेदस्योत्पन्नात्मज्ञानस्य योगिनः कारुणिकस्य वाह्यकर्मत्यागानुज्ञया अयोगिनामिव वाह्यकर्मा-करणे प्रत्यवायात् योगरूपस्यैव नित्यकर्मणो मन्वादिभिर्विहित-त्वाच्च। यथा मनौ।

एतानेके महायज्ञान् यज्ञशास्त्रविदो जनाः।
अनीहमानाः सततमिन्द्रियेष्वेव जुह्वति॥

इति। अतएव वशिष्ठेन वाह्याभ्यन्तरकर्मणोर्विकल्प उक्तः।

वाह्यमाभ्यन्तरं चेति द्विविधं कर्म वैदिकम्।
तयोरन्यतरत् कुर्य्यान्नित्यं कर्म यथाविधि॥

इति। तयोश्चाभ्यन्तरं कर्म हिंसाद्यभावात् ऐकाग्र्यरूप-त्वाच्च श्रेष्ठं गीतादिषूक्तम् 'श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः

परन्तपे'त्यादिना। भाष्यकारश्च वैधहिंसाया अपि पापहेतुत्वमग्रे प्रतिपादयिष्यति 'शौचादिषु चापरिहार्य्या हिंसा चाश्रमविहितैवे'ति न तया व्रतलोपः स्वाश्रमधर्माविरोधित्वेन विशेषितत्वादिति ॥ ३१ ॥

*** शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥ ३२ ॥ ***

तत्र शौचं मृज्जलादिजनितं मेध्याभ्यवहरणादि च बाह्यम्। आभ्यन्तरं चित्तमलानामाक्षालनम्। सन्तोषः सन्निहितसाधनादधिकस्य अनुपादित्सा। तपः द्वन्द्वसहनं, द्वन्द्वश्च जिघत्सापिपासे, शीतोष्णे, स्थानासने, काष्ठमौनाकारमौने च, व्रतानि चैषां यथायोगं कृच्छ्रचान्द्रायणसान्तपनादीनि। स्वाध्यायः मोक्षशास्त्राणामध्ययनं, प्रणवजपो वा। ईश्वरप्रणिधानं तस्मिन् परमगुरौ सर्वकर्मार्पणं, "शय्यासनस्थोऽथ पथि व्रजन् वा स्वस्थः परिक्षीणवितर्कजालः। संसारबीजक्षयमीक्षमाणः स्यान्नित्यमुक्तोऽमृतभोगभागी"। यत्रेदमुक्तं "ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च" इति ॥ ३२ ॥

यमान् व्याख्याय नियमान् व्याचष्टे।

स्थूलशरीरस्यैव बाह्यान्तररूपेणादौ द्विविधं बाह्यशौचं दर्शयति। मृज्जलेति। मेध्यं गोमूत्रयवाग्वादि तेषां भक्षणं

मेध्याभ्यवहरणम् आदिशब्देनोपवासादयो ग्राह्याः। मानसमपि शौचमाह। आभ्यन्तरमिति। सत्त्वस्वभावस्य चित्तस्य मला रागद्वेषादयस्तेषां मैत्र्यादिना प्रक्षालनं प्रसाद इति प्रागुक्तमित्यर्थः। सन्तोषं व्याचष्टे। सन्निहितेति। अत्यावश्यकप्राणयात्रानिर्वाहकविद्यमानसाधनादतिरिक्तस्य अलिप्सेत्यर्थः। द्वन्द्वान्याह। जिघत्सेति। जिघत्सा बुभुक्षा, यद्यपि शीतोष्णादिवत् परस्परविरुद्धत्वं बुभुक्षापिपासयोर्नास्ति तथापि मिथुनवदेव पारिभाषिकद्वन्द्वता। स्थानमूर्द्ध्वावस्थानम्। आसनं चोपवेशनम्। काष्ठमौनमिङ्गितेनापि स्वाभिप्रायाप्रकाशनम्। आकारमौनं त्ववचनमात्रम्। एतानि शास्त्रोक्तव्रतेनैव सोढव्यानि न तु वृथा इत्याशयेनाह। व्रतानि च एषामिति। स्वाध्यायव्याख्या सुकरा। तज्जपस्तदर्थभावनमिति प्रथमपादोक्तप्रणिधानव्यावृत्त्यर्थं द्वितीयपादाद्यसूत्रवाक्यार्थमेव प्रणिधानशब्दार्थं स्मारयति। तस्मिन् परमगुरौ सर्वकर्मार्पणमिति। एतच्च तत्रैव व्याख्यातम्। ननु एवं तदर्थभावनरूपमेव प्रणिधानमर्थो भवतु। न। वहिरङ्गताया वक्ष्यमाणत्वात्। ईश्वरभावनं हि ध्यानरूपतया योगस्यान्तरङ्गमेव। तत्त्रयमन्तरङ्गमिति वक्ष्यमाणसूत्रात् सर्वकर्मार्पणमेव मुख्यतो ध्येयं न तु ईश्वरतत्त्वम्। 'कुर्य्यात् कर्म सन्न्यासचिन्तन'मिति योगियाज्ञवल्क्यवाक्यात्।

नाहं कर्त्ता सर्वमेतन्मनसा कुरुते तथा।
एतद् ब्रह्मार्पणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः॥

इति कौर्माच्च। ईश्वरस्तु सामान्यतस्तद्विशेषणतामात्रेण कर्त्तृत्वारोपेण च ध्येय इत्यतो युक्ता तस्य योगवहिरङ्गतेति। तदेवं सूत्रगणोक्ता यमनियमा विष्णुपुराणादिषु अपि दर्शिताः।

ब्रह्मचर्य्यमहिंसां च सत्यास्तेयपरिग्रहान्।
सेवेत योगी निष्कामो योग्यतां मनसो नयन्॥

स्वाध्यायशौचसन्तोषतपांसि नियतात्मवान्।
कुर्वीत ब्रह्मणि तथा परस्मिन् प्रवणं मनः॥

इत्यादिभिः। एतेषु दशसु मध्ये ईश्वरप्रणिधानस्य मुख्यतो योगाङ्गत्वमिति प्रतिपादनाय निर्विघ्नपरमात्मयोगहेतुत्वं तस्याह श्लोकेन। शय्यासनेति। ईश्वरप्रणिधानी तदनुग्रहात् सदैव योगयुक्तः स्यादिति श्लोकार्थः। स्वस्थः परमात्मनिष्ठः परमात्मार्पितकर्मणां मुख्यतस्तद्योगस्यैव कल्पनौचित्यात् वितर्कजालो यो वक्ष्यमाणः स वक्ष्यमाणप्रतिपक्षभावनां विनापि परिक्षीणो यस्य स तथा। संसारवीजानां संस्कारादीनां क्षयमनुदिनमुपलभमानः तथामृतभोगभागी जीवन्मुक्तिसुखानुभवितेत्येवम्भूतो नित्ययुक्तः स्यादित्यर्थः। न केवलमीश्वरेऽर्पितकर्मण ऐश्वरयोग एव भवति अपि तु ईश्वरसाक्षात्कारद्वारा पूर्णत्वादिना जीवतत्त्वसाक्षात्कारोऽपीत्युक्तमेव स्मारयति। यत्र इदमुक्तमिति। यत्र ईश्वरयोगे। ननु यमनियमयोर्मध्ये यज्ञदानाद्यवचनान्न्यूनतेति चेत्, न।

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्।
ब्रह्मचर्य्यमहिंसा च शारीरं तप उच्यते॥

इत्यादिवाक्येभ्योऽत्रानुक्तकर्मणां तपस्येवान्तर्भावात्। एवं योगिनामन्तर्यागाभयदानादेरपि तपस्येवान्तर्भावः। देवब्राह्मणार्थहिंसाया अपि त्याज्यवचनेन च प्रकृष्टयोगिनां वाह्यकर्मणाम् अभावसिद्धिरिति। तदेवं यमाः पञ्च नियमाश्च पञ्च सर्वस्मृतिसिद्धाः प्रोक्ताः। ननु यमानामभावरूपतया कालाद्यनवच्छिन्नत्वसम्भवात् सार्वभौमत्वमुक्तं नियमानान्तु प्रतिनियतकालावच्छिन्नतया न सार्वभौमत्वं सम्भवति अतो नात्र महाव्रतरूपो विशेष उक्त इति। यथोक्तयोश्च यमनियमयोर्मध्ये निवृत्तिरूपतया शक्यसम्पादनत्वेन यमा एव परमहंसानामाव-

श्यका जड़भरतादीनामपि अहिंसापालनस्य विष्णुपुराणादौ स्मरणात् । न तु नियमाः प्रवृत्तिरूपतया योगान्तरायत्वात् । तदुक्तं भागवते

यमानभीक्ष्णं सेवेत नियमान् मत्परः क्वचित् ।

इति । उक्तेषु यमनियमेषु वक्ष्यमाणविघ्नस्य निवृत्त्युपाय-प्रतिपादकं सूत्रं पूरयित्वावतारयति । एतेषां यमनियमाना-मिति ॥ ३२ ॥

एतेषां यमनियमानां

* वितर्कबाधने प्रतिपक्षभावनम् ॥ ३३ ॥

यदा अस्य ब्राह्मणस्य हिंसादयो वितर्का जायेरन् हनिष्याम्यहमपकारिणम्, अनृतमपि वक्ष्यामि, द्रव्यमप्यस्य स्वीकरिष्यामि, दारेषु च अस्य व्यवायी भविष्यामि, परिग्रहेषु च अस्य स्वामी भविष्यामीति । एवमुन्मार्गप्रवणवितर्क-ज्वरेण अतिदीप्तेन बाध्यमानस्तत्प्रतिपक्षान् भावयेत् घोरेषु संसाराङ्गारेषु पच्यमानेन मया शरणमुपागतः सर्वभूताभयप्रदानेन योगधर्मः, स खल्वहं त्यक्त्वा वितर्कान् पुनस्तानाददान-स्तुल्यः श्ववृत्तेन इति भावयेत्, यथा श्वा वान्ता-वलेही तथा त्यक्तस्य पुनराददान इति । एव-मादि सूत्रान्तरेषु अपि योज्यम् ॥ ३३ ॥

वक्ष्यमाणवितर्कैर्यमादिबाधने सति वक्ष्यमाणं प्रतिपक्षभावनं कुर्य्यादित्यर्थः। तदेतद्व्याचष्टे। यदास्येति। विपरीतास्तर्का विचारा येषु इति वितर्कसंज्ञा हिंसादिषु तान्त्रिकी। तर्कस्यात्र विशेषणं, तथाच वितर्क्यमाणो हिंसादिर्वितर्कः तेन बाधने स्वाभिमुखीकरणे प्रतिपक्षभावनम्। उत्तरसूत्रवक्ष्यमाणं कुर्य्यादित्यर्थः। विपरीततर्कस्याकारमाह। हनिष्यामीत्यादिना इतीत्यन्तेन। एवं नियमपञ्चकेऽपि त्यक्ष्याम्यहं शौचमित्यादयो वितर्काः द्रष्टव्याः युक्तिसाम्यात्। सूत्रतात्पर्य्यार्थमाह। एवमिति। एवमुन्मार्गाभिमुखेन हिंसादिगतेन वितर्कज्वरेण ज्वलितेन बाध्यमानो योगी वितर्कविरोधिज्ञानविषयतया वितर्कप्रतिपक्षान् दुःखादिफलकत्वादीन् भावयेत् चिन्तयेत् इत्यर्थः। प्रतिपक्षभावनं व्याचष्टे। घोरेषु इत्यादिना भावयेदित्यन्तेन। वितर्कान् हिंसादीन्। अत्र दुःखफलत्वचिन्तनं वाक्यतात्पर्य्यार्थः। तुल्यत्वमेव विवृणोति। यथेति। एवमादीति। वितर्कबाधने प्रतिपक्षभावनमित्येवमादिकं सूत्रान्तरेषु आसनप्राणायामसूत्रेषु अपि योजनीयम्। आदिशब्देन अस्य सूत्रस्य व्याख्या उत्तरसूत्रं च ग्राह्यम्। आसनादिषु च वितर्का आसनादिकं त्यक्ष्ये इत्यादिरूपा इति शेषः। इदानीं ये वितर्काः ये वा वितर्कस्य प्रतिपक्षाः यादृशं वा तच्चिन्तनं तत्त्रयमाह॥ ३३॥

*वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम् ॥३४॥ *

तत्र हिंसा तावत् कृता कारितानुमोदि-

तेति त्रिधा, एकैका पुनस्त्रिधा लोभेन मांस-चर्मार्थिन, क्रोधेन अपकृतमनेनेति, मोहेन धर्मो मे भविष्यतीति, लोभक्रोधमोहाः पुनस्त्रिविधाः मृदुमध्याधिमात्रा इति, एवं सप्तविंशति भेदा भवन्ति हिंसायाः, मृदुमध्याधिमात्राः पुनस्त्रेधा, मृदुमृदुः, मध्यमृदुः, तीव्रमृदुरिति, तथा मृदु-मध्यः मध्यमध्यः, तीव्रमध्य इति, तथा मृदुतीव्रः, मध्यतीव्रः, अधिमात्रतीव्रः, इति, एवमेकाशीति-भेदा हिंसा भवति, सा पुनर्नियमविकल्पसमु-च्चयभेदादसंख्येया, प्राणभृद्भेदस्यापरिसंख्येयत्वा-दिति। एवमनृतादिषु अपि योज्यम्। ते खलु अमी वितर्का दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनं, दुःखमज्ञानञ्च अनन्तफलं येषा-मिति प्रतिपक्षभावनं, तथा च हिंसकः प्रथमं तावद् बध्यस्य वीर्य्यमाक्षिपति, ततः शस्त्रादि-निपातेन दुःखयति, ततो जीवितादपि मोच-यति, ततो वीर्य्याक्षेपादस्य चेतनाचेतनमुप-करणं क्षीणवीर्य्यं भवति, दुःखोत्पादान्नरक-तिर्य्यक्प्रेतादिषु दुःखमनुभवति, जीवितव्यप-रोपणात् प्रतिक्षणं च जीवितात्यये वर्त्तमानो

मरणमिच्छन्नपि दुःखविपाकस्य नियतविपाकवेदनीयत्वात् कथञ्चिदेवोच्छ्वसिति, यदि च कथञ्चित् पुण्यावापगता हिंसा भवेत्तत्र सुखप्राप्तौ भवेदल्पायुरिति, एवमनृतादिषु अपि योज्यं यथासम्भवम्। एवं वितर्काणां च अमुमेवानुगतं विपाकमनिष्टं भावयन्न वितर्केषु मनः प्रणिदधीत। प्रतिपक्षभावनाद् हेतोर्हेया वितर्काः ॥ ३४ ॥

हिंसादय इति। वितर्काणां स्वरूपकथनं विशेषणत्रयेण। तत्तद्गतविशेषाणां कथनं सर्वथैव हेयत्वप्रतिपादनाय। दुःखादिफलकत्वकथनं च प्रतिपक्षकथनम्। प्रतिपक्षान् भावयेदितिपूर्वसूत्रीयभाष्यानुपपत्त्या प्रतिपक्षभावनमित्यन्तकर्मधारयासम्भवात्। शेषेण च भावनकथनमिति। दुःखाज्ञाने एव अनन्ते फले येषामिति विग्रहः। विशेषणत्रयोक्तान् विशेषान् विवृणोति। तत्र हिंसेति। कृतेति। कृता वा कारिता वा अनुमोदिता वेत्यर्थः। तत्र कृता स्वयं निष्पादिता कारिता कुर्वित्युक्ता अनुमोदिता परैः क्रियमाणा साधु साध्वित्यङ्गीकृता। कृतादीनामपि द्वितीयविशेषणोक्तं त्रैविध्यं व्याचष्टे। एकैकेति। लोभेन इत्यस्य व्याख्या। मांसचर्मार्थेन मांसचर्मादिप्रयोजनेन तथा अपकृतमनेन इत्येवं क्रोधेन तथा मोहेन यज्ञार्थहिंसया निर्दोषो धर्मो भविष्यतीत्येवं रूपेणेत्यर्थः। यद्यपि मृदुमध्याधिमात्रा इति हिंसादिविशेषणं सूत्रेऽस्ति तथापि लोभादेर्मृदुत्वादिनैव हिंसादेर्मृदुत्वादिकमत्र विवक्षितमर्थसौष्ठवाय इत्याश-

येन लोभादिविशेषणतया मृदुत्वादीन् व्याचष्टे। लोभक्रोध-मोहा इति। लोभक्रोधमोहा एकैकाः पुनस्त्रिधा मृदुमध्याधि-मात्रा इत्यर्थः। एवमित्यादि हिंसाया इत्यन्तमेकं वाक्यं मृदु-मध्याधिमात्रत्वात् ततोऽपि विशेष इति पूर्वपादीयसूत्रा-नुसारेण। यौक्तिकान् अपरान् विशेषान् स्वयमाह। मृदु-मध्याधिमात्राः पुनस्त्रिधेति। सर्वत्र तीव्रत्वमधिमात्रता, शेषं स्पष्टम्। सा पुनर्नियमेति। मत्स्येषु एव हिंसेत्यादिर्नियमः। एकस्मिन् दिवसे स्थावरस्य जङ्गमस्य वा अन्यतरस्यैव हिंसा नोभयोरित्यादिर्विकल्पः। स्थावरजङ्गमयोरुभयोरेव अव्यवस्थया हिंसेत्यादिः समुच्चयः। इत्येवं नियमविकल्प समुच्चयानाम् आनन्त्यात् हिंसा असंख्येयभेदेत्यर्थः। नियमाद्यानन्त्ये हेतुः, प्राणभृदिति। हिंसकानां हिंस्यानां वा असंख्यतया निय-मादीनामनन्तप्रकारत्वमित्यर्थः। एवमिति। हिंसायामिव अनृ-तादिरूपवितर्केषु अपि कृतकारिता इत्यादिविभागा योज-नीया इत्यर्थः। अज्ञानं चेति। अज्ञानं सम्मोहः हिंसातो दुःखाज्ञाने यथा भवतस्तदाह। तथा चेति। तथा हीत्यर्थः। वीर्य्याक्षेपो बलात् नियमनम्। एवं त्रिप्रकारहिंसनात् त्रिप्र-कारमेव दुःखं हन्ता प्राप्नोति कर्मानुरूपफलोदयादिति प्रति-पादयति। ततो वीर्य्येति। परस्य वीर्य्याक्षेपात् तस्य हन्तु-रपि चेतनाचेतनमुपकरणं स्त्रीपुत्रधनादिकं क्षीणवीर्य्यं कार्य्या-क्षमं भवति। तथा परस्य शस्त्रादिना दुःखोत्पादनात् हन्तापि नरकादिषु याम्यशस्त्रादिना दुःखमनुभवति। तथा परस्य जीवितव्यपरोपणात् प्राणवियोजनात् तत्कर्त्तापि प्रतिक्षणं जीवितात्ययं रोगादिना मरणावस्थां सम्मोहमयीमापन्नो मरण-मिच्छन्नपि कथञ्चिदेव जीवति। ननु तदानीमेव कथं मरणं न भवति तत्राह। दुःखविपाकस्येति। दुःखरूपस्य विपाकस्य

अनङ्गीकारादिति। यद्यपि आदौ क्रोधादीनां स्वरूपतो निर्विकल्प एव बोधः पौरुषेयो भवति क्रुद्धोऽहमित्यादिस्तु अहङ्कारस्यैव वृत्तिः पुरुषस्य भ्रान्तत्वात् कूटस्थतया बुद्धिवृत्त्याकारातिरिक्ताकारासम्भवाच्च तथापि पौरुषेयेण क्रोधनिर्विकल्पेन जनिता क्रुद्धोऽहमिति या अन्तःकरणस्य विशिष्टवृत्तिस्तत्साक्षिको बोधस्य तद्ग्राह्यत्वेनैवात्र चित्तस्य अग्राह्यत्वं प्रतिषिध्यते क्रोधादीनां पौरुषेयनिर्विकल्पकस्य शब्दागोचरत्वेनोपन्यस्तुमशक्यत्वात् पुरुषसाधकं तु चित्तग्रहणं वृत्तिगोचरनिर्विकल्पकमनुमानगम्यमेव तस्य हि चित्तधर्मत्वं सम्भवति नियमेन सर्ववृत्तिगोचराया जन्यनिर्विकल्पकधारायाः स्वीकारे अनवस्थापत्तेः। अज्ञातवृत्तिस्वीकारे च क्रुद्धोऽहं न वा इत्यादिसंशयाद्यापत्तेः। क्रोधादिगोचरनित्यनिर्विकल्पकैकज्ञानस्वीकारे च विशिष्टप्रत्यक्षसामग्र्या बलवत्याः प्रतिबन्धात् संशयाद्यभावः। सम्प्रज्ञातयोगेऽपि वृत्तिः स्वरूपतो भासत एवेत्यभ्युपेयमिति। चित्तस्य स्वाभासतावादिमते तन्मतमालम्ब्यैवान्यदूषणमाह ॥१९॥

*** एकसमये चोभयानवधारणम् ॥ २० ॥ ***

**न चैकस्मिन् क्षणे स्वपररूपावधारणं युक्तं, क्षणिकवादिनो यद् भवनं सैव क्रिया तदेव च कारकमित्यभ्युपगमः ॥ २० ॥**

सूत्रार्थमाह। न च इत्यादिना युक्तमित्यन्तेन। न च नाप्येकस्मिन्नुत्पत्तिक्षण एव स्वपरावधारणं युक्तं पूर्वं सत एव प्रत्यक्षगोचरत्वात् स्वस्य च प्रागसत्त्वादित्यर्थः। नन्वेवं स्वोत्पत्त्यनन्तरं स्वग्रहणमस्तु तत्राह। क्षणिकेति। क्षणिकवादिमते या वस्तुन उत्पत्तिः सैव क्रिया तस्य कार्यं सैव च तस्य कर्त्रादिकारकवर्गः तन्मते सर्ववस्तूत्पत्तिमात्रफलकं निर्हेतुकं स्वयमेव

भवतीति सिद्धान्तः । तथा चोक्तं 'भूतिर्येषां क्रिया सैव कारकं सैव चोच्यत' इति । अत्र उत्पत्त्यनन्तरं चित्तस्य स्वग्रहणार्थां क्रिया न सम्भवतीत्यर्थः । अस्मन्मतेऽपि शब्दबुद्धिकर्मणां विरम्य व्यापाराभावादेकस्या वृत्तेर्द्वार्थग्राहकत्वं न सम्भवतीति भावः । उत्तरसूत्रमवतारयति । स्यान्मतिरिति । मतिरभ्युपगमः । ननु स्वाभासशब्देन स्वसन्तानभास्यत्वं वक्तव्यं तथा च स्वरसेन विनाशस्वभावेन निरुद्धं नष्टमपि चित्तमुत्तरोत्तरमुत्पन्नेन चित्तान्तरेण ग्राह्यमित्यभ्युपगमः स्यादिति न कर्मकर्तृविरोधादिदोष इत्यर्थः । तत्र सिद्धान्तसूत्रम् ॥ २० ॥

स्यान्मतिः स्वरसनिरुद्धं चित्तं चित्तान्तरेण गृह्यत इति ।

* चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसङ्करश्च ॥ २१ ॥ *

अथ चित्तं चेच्चित्तान्तरेण गृह्येत, बुद्धिबुद्धिः केन गृह्यते साप्यन्यया साप्यन्ययेत्यतिप्रसङ्गः, स्मृतिसङ्करश्च यावन्तो बुद्धिबुद्धीनामनुभवास्तावन्त्यः स्मृतयः प्राप्नुवन्ति, तत्सङ्कराच्चैकस्मृत्यनवधारणं च स्यात्, इत्येवं बुद्धिप्रतिसंवेदिनं पुरुषमपलपद्भिर्वैनाशिकैः सर्वमेव आकुलीकृतं, ते तु भोक्तृस्वरूपं यत्र क्वचन कल्पयन्तो न न्यायेन सङ्गच्छन्ते केचित्, सत्त्वमात्रमपि परिकल्प्यास्ति स सत्त्वो य एतान् पञ्च स्कन्धान् निक्षिप्यान्यांश्च

प्रतिसन्दधातीत्युक्त्वा तत एव पुनस्त्रस्यन्ति, तथा स्कन्धानां महानिर्वेदाय विरागायानुत्पादाय प्रशान्तये गुरोरन्तिके ब्रह्मचर्य्यं चरिष्यामीत्युक्त्वा सत्त्वस्य पुनः सत्त्वमेवापह्नुवते। साङ्ख्ययोगादयस्तु प्रवादाः स्वशब्देन पुरुषमेव स्वामिनं चित्तस्य भोक्तारमुपयन्ति, इति ॥ २१ ॥

वृत्तिरूपचित्तान्तरेण वृत्तिरूपचित्ते दृश्येऽभ्युपगम्यमाने तु बुद्धिबुद्धेर्वृत्तिवृत्तेरतिप्रसङ्गोऽनवस्था। एतद्व्याचष्टे। अथेति। बुद्धिबुद्धिश्चित्तगोचरं चित्तं परेषां वृत्त्यतिरिक्तचित्ताभावेन वृत्तिचित्तयोः पर्य्यायत्वात्। ननु नेयमनवस्था सर्वमेव चित्तं ग्रहीतव्यमिति नियमाभावादिति चेन्न। वृत्तेरज्ञातसत्ताङ्गीकारे जानामि न वा इत्यादिसंशयापत्तेः। योग्यानुपलब्ध्या ज्ञानाद्यभावप्रत्यक्षानुपपत्तेश्च। किञ्च मा भवतु अनवस्था वृत्तिगोचरानन्तवृत्तिकल्पनागौरवं त्वपरिहार्य्यमेव। अस्माभिर्लाघवेन सकलवृत्तिगोचरैकविभुज्ञानकल्पनादिति। एतेन चित्तनित्यत्वाभ्युपगमिनामपि न्यायवैशेषिकाणामुत्तरोत्तरज्ञानेन पूर्वपूर्वज्ञानग्रहणकल्पना परास्ता अनवस्थागौरवाभ्यामिति मन्तव्यम्। अतिप्रसङ्गं व्याख्याय स्मृतिसङ्करं व्याचष्टे। स्मृतिसङ्करश्चेति। बुद्धिबुद्धेरिति शेषः। सङ्करशब्दार्थमाह। यावन्त इति। विषयानुभवकाले ज्ञानधारा जातेति विषयस्मृतिकालेऽपि अनन्तानां तज्ज्ञानानां स्मृतिरेकदा एव भविष्यति। घटो मया पुरा ज्ञातो घटज्ञानं तज्ज्ञानं चेत्येवमनन्ताकारः सोऽयं स्मृतिसङ्करः प्राप्त इत्यर्थः। अस्मन्मते च पौरुषेयबोधस्य नित्यतया निर्विकल्पमात्रतया च न स्मृतिहेतुत्वमिति। ननु एता-

दृश्यसङ्करे को दोष इति तत्राह । तत्सङ्कराश्चेति । सङ्कराभ्युपगमे च घटो मया ज्ञात इत्येकमात्राकारस्मृत्यनुभवो न स्यादित्यर्थः । अन्यान्यपि दूषणानि सूचयन्नास्तिकमतं तिरस्करोति । एवं बुद्धीति । सर्वं बन्धमोक्षधर्माधर्मादिव्यवस्थादिकम् । तदेवं चित्ताद्विविच्य मोक्षी व्यवस्थापितः पित्तस्य च स्वाभासत्वं निराकृतम् । इदानीं परेषामिष्टोक्तात्मतत्त्वावधारणस्य स्वाभ्युपगमविरोधेनापि अन्याय्यतामाह । ते त्विति । भोक्तृस्वरूपं न न्यायेन सङ्गच्छन्ते न्यायविरुद्धा इत्यर्थः । तेषां विज्ञानवादः शून्यवादश्चेति मुख्यं मतद्वयं तत्रादौ विज्ञानवादिनां क्षणिकताख्यस्वाभ्युपगमविरोधात् न्यायविरुद्धाद्वयं दर्शयति । केचिदिति । सत्त्वमात्रं क्षणिकविज्ञानरूपं चित्तमात्रं परिकल्प्य स्वीकृत्य तस्यैव मोक्षं वदन्ति । अस्ति स सत्त्वविशेषो य एतान् सांसारिकान् पञ्च स्कन्धान् हित्वा अन्यांश्च पञ्च स्कन्धान् युक्तोऽनुभवतीति ततश्च तत एव स्वाभ्युपगमात् पुनस्त्रस्यन्ति चित्तस्थैर्य्यापत्त्येत्यर्थः । अतो न्यायविरुद्धास्त इति, पञ्चस्कन्धाश्च विज्ञानवेदनासंज्ञानरूपसंस्काराख्याश्चित्तस्यैव शाखाभेदा न तु चित्ताद्भिन्नाः । तत्र विज्ञानं विषयानुभवः । वेदना दुःखम् संज्ञारूपे शब्दार्थौ इति यावत् । संस्कारो वासना । एतेषु एषामपि सुखादीनां प्रवेश इति अखिलं वस्तु चित्तमेवेति । शून्यवादेऽप्याह । तथेति । तथा अन्ये केचित् स्कन्धानां महन्निर्वेदाय महानिर्वेदाख्यवैराग्याय अपुनर्जन्मरूपप्रशान्तये च जीवन्मुक्तस्य गुरोरन्तिके ब्रह्मचर्य्यं ब्रह्माभ्यासं साक्षात्कारपर्य्यन्तं करिष्यामीत्युक्त्वा शिष्यतामापन्ना नास्तिका गुरूपदेशात् सत्त्वस्य अहंशब्दार्थस्यापि सत्तामपलपन्ति शून्यवादिनो भवन्ति इत्यर्थः । तेऽपि न्यायविरुद्धा भोक्तुः सत्त्वस्यापलापेन स्वाभिप्रेतस्य मोक्षस्य अहंशब्दार्थस्य ब्रह्मचर्य्यादीनां वा सत्तास्वीकारात् सेयमुद्देश्य-

विस्मृतिः कथं मूढान्न लज्जयतीति। एतेन आधुनिकवेदान्तिब्रुवा अपि न्यायविरुद्धा मन्तव्याः। तेऽपि हि मोक्षाद्यर्थं गुरुमुपासना ब्रह्मातिरिक्तं सर्वं शुक्तिरजतवत् अत्यन्ततुच्छमिति गुरूपदेशात् मोक्षतत्साधनादिकमेवापलपन्तीति। अपि चोपदेशानन्तरमकृतसाक्षात्कारस्य मननादिसाधनाद्यनुष्ठानाभ्युपगमोऽपि तेषां न न्याय्यो [illegible] उपदेशेन फलतत्साधनेषु सर्वेषु एव अविश्वासात्। अश्रद्ध[illegible]ऽपि फलानुदयाच्च। किं बहुना श्रुत्यादिप्रामाण्यबाधके[illegible] ज्ञानप्रामाण्यसंशयाद्याहितः संशयो योगान्तेऽपि ब्रह्मणि स्यात्। न च स्वप्रकाशतया ब्रह्मणि न प्रमाणापेक्षेति वाच्यम्। प्रकाशतस्तस्य तत्सिद्धौ कर्मकर्तृविरोधादिति सांख्यसूत्रोक्तदोषात् स्वाभ्युपगतश्रवणादिवैयर्थ्यापत्तेश्च मोक्षसाधनविषयस्य विवेकस्यास्वप्रकाशत्वाच्च। यत्तु अवेद्यत्वेऽपि प्रत्यक्षव्यवहारयोग्यत्वं स्वप्रकाशत्वमिति प्रलपनं तत् शशशृङ्गवन्मन्तव्यम्। वेदनस्य व्यवहारं प्रति सामानाधिकरण्येन हेतुत्वात् द्रष्टव्यत्वादिश्रुतिविरोधाच्चेति। सैषा अतिनास्तिकता दृश्यतेऽपि वहिर्मुखानां यतिमानिनामिति। आधुनिकानां वेदान्ते विवर्त्तवादो यथा यथा विचार्य्यते तथा तथा न्यायविरोधेन सिकतासेतुवद्विदीर्यते। स्वमते तु नास्त्ययं न्यायविरोधः मोक्षभागिनोऽहंशब्दार्थस्य भोक्तुः स्थिरस्य स्वीकारादित्याह। सांख्ययोगादयस्त्विति। आदिशब्देन ब्रह्ममीमांसादयो ग्राह्याः। प्रकृष्टा वादाः प्रवादाः स्वशब्देनाहं स्वमात्मेत्यादिशब्दजातेन न तु अन्यः। कथमन्यस्यात्माहमित्यादिवृत्तिगोचरः स्यात् तत्राह। चित्तस्य स्वामिनमिति। स्वामी ह्यात्मा लोके व्यवह्रियते यच्चाप्नोति यदादत्ते इत्यादिशास्त्रे चेति। अपरिणामिनि यथेष्टविनियोक्तृत्वाभावात् कथं स्वामित्वं तत्राह। भोक्तारमिति। अत्र च स्वतोऽपि पुरुषस्य भोगोऽस्तीत्यवधारणीयम्। प्रकृतोप-

पत्तये चित्तस्य स्वाभासत्वं निराकृतम् इदानीं सदाज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामादिति सूत्रस्योपपादकं सूत्रमितेनैव प्रसङ्गेनोत्थापयति। कथमिति। ननु अपरिणामित्वे विषये सञ्चाराभावात् तदाकारपरिणामाभावाच्च कथं चित्तज्ञातृत्वरूपं चित्तभोक्तृत्वं पुरुषस्य स्यात्। चित्तस्थले हि घटादिविषयग्रहणं चित्तस्य सञ्चारात् तदाकारपरिणामाच्च दृष्टमित्यर्थः। तत्र सिद्धान्तसूत्रम् ॥ २१ ॥

कथम्,—

* चितेरप्रतिसङ्क्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥ २२ ॥ *

अपरिणामिनी हि भोक्तृशक्तिरप्रतिसङ्क्रमा च परिणामिन्यर्थे प्रतिसङ्क्रान्तेव तद्वृत्तिमनुपतति, तस्याश्च प्राप्तचैतन्योपग्रहस्वरूपाया बुद्धिवृत्तेरनुकारिमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिराख्यायते। तथाचोक्तं "न पातालं न च विवरं गिरीणां नैवान्धकारं कुक्षयो नोदधीनाम्। गुहा यस्यां निहितं ब्रह्म शाश्वतं बुद्धिवृत्तिमविशिष्टां कवयो वेदयन्ते" इति ॥ २२ ॥

अप्रतिसञ्चाराया अपि चितेः स्वीयबुद्धिवृत्तिदर्शनं बुद्धिवृत्त्याकारतापत्त्यैव भवतीत्यर्थः। अयं भावः। ज्ञातुः सञ्चारो न साक्षादेव ज्ञाने हेतुः किन्तु अर्थाकारता हेतुः सन्निकर्षद्वारा। अन्यथा स्वप्नादौ मनःसञ्चाराभावेन अर्थभानायोगात्। अतो विभुत्वेनैव सर्वत्र सन्निकृष्टस्यात्मनः सञ्चारो न अपेक्ष्यत इति।

आपत्तिग्रहणं च पुरुषस्य पारमार्थिकाकारप्रतिषेधार्थम्। यथा हि विषयासन्निकर्षकालेऽपि स्वप्नादौ तज्ज्ञानाय अगत्या चित्तस्य तदाकारः परिणाम इष्यते नैवं पुरुषस्य चित्तवृत्त्यभावेऽपि तज्ज्ञानं भवति येन पुरुषेऽपि वृत्त्याकारः परिणाम इष्येत किन्तु स्फटिके सन्निकृष्टजपालौहित्यस्येव चित्तवृत्तेः प्रतिविम्बमेव लाघवादिष्यते। उभयत्र आकाराख्यपरिणामकल्पने गौरवात् स्फटिकदर्पणादेः स्वप्रतिविम्बितवस्तुप्रकाशकत्वस्य सिद्धत्वाच्चेति। तदिदं वृत्तिविम्बितमेव वृत्त्याकारापत्तिरित्युक्तं सूत्रकारेणेति। भाष्यकारः पुरुषस्य बुद्ध्याकारतां प्रतिपादयितुमादौ बुद्धेरेव रूपमाह। अपरिणामिनीति। भोक्तृशक्तिः पुरुषाख्या अपरिणामिनी अतो नापि गतिमती ततो न स्वप्नजाग्रतोश्चित्तस्येव पुरुषस्य ज्ञानं सम्भवति किन्तु वृत्तिस्वरूपपरिणामिनी अर्थे चितिः प्रतिसंक्रान्तेव प्रतिविम्बरूपेण सञ्चरितेव सती तद्वृत्तिमनुपतति तद्वृत्तिं चेतनवत्करोतीत्यर्थः। अन्यथा हि घटमहं जानामीति बुद्धिवृत्त्यनुपपत्तिः बुद्धेरनहन्त्वात् अचेतनत्वाच्चेत्युत्तरसूत्रे वक्ष्यति। अथ अविवेकादेव एतादृशी बुद्धिवृत्तिरिति चेत्सत्यं, तथापि अविवेक एव प्रतिविम्बमूलकः दोषान्तराभावात् तथा चेतनभानार्थमपि वृत्तौ तत्प्रतिविम्बः कल्प्यते बुद्ध्यारूढतयैव शब्दादिवत् आत्मनोऽपि भानादिति। इदमेव प्रतिविम्बं बुद्धेश्चिच्छायापत्तिरित्युच्यते तथा बुद्धेरर्थाकारतावत् आत्माकारतेत्यपि उच्यत इति मन्तव्यम्। यद्यपि घटाद्याकारपरिणामवत् आत्माकारपरिणाम एव बुद्धेर्भवति तथापि प्रतिविम्बतुल्यतया स एव प्रतिविम्बमप्युच्यते। बुद्धेः रूपं प्रदर्श्य पुरुषस्य तदाकारतापत्तिं दर्शयति। तस्याश्चेति। हिशब्दोऽत्रावधारणे, तस्या अपि चितिर्ज्ञानरूपा वृत्तिर्बुद्धिवृत्त्यविशिष्टैव इत्याख्यायते व्यवह्रियते। [illegible] प्राप्तेत्यादि। प्राप्तचैतन्योपग्रहचैतन्यप्रति-

विम्बं येन एतादृशं रूपं यस्या बुद्धिवृत्तेस्तदनुकारिमात्रतया तत्प्रतिविम्बाधारतामात्रेणेत्यर्थः। द्रष्टा दृशिमात्र इति सूत्रेऽपीदमेव वाक्यं भाष्यकारैः प्रमाणत्वेनोपन्यस्तं, वृत्तिसारूप्यमितरत्र इत्यत्रापि एतदुक्तमिति स्मर्त्तव्यम्। ननु जानाम्यहं क्रुद्धोऽहं भीतोऽहमित्यादिरूपता वृत्तेरेवेति प्रागेवोक्तं तर्हि निर्विकल्पकस्य वृत्तिबोधस्य स्वरूपं कीदृशमिति। उच्यते। यादृशं ज्ञानक्रोधादिवृत्तीनां रूपं तादृशमेव विम्बप्रतिविम्बोद्ग्रहणात् तदेव वृत्तिबोधस्य रूपं, स च वृत्तिबोधो वृत्त्यविवेकेन जानामीतिवृत्त्यन्तरस्य विषय एव भवति ज्ञानचितिबोधादिशब्दानां पर्य्यायत्वादिति। एकाकारतापत्तौ आगममपि प्रमाणयति। तथा चोक्तमिति। न पातालमित्यादेरयमर्थः। गुहाहितं गह्वरेष्टं पुराणमित्यादिश्रुतिस्मृतिषु यस्यां गुहायां गुह्यं शाश्वतं ब्रह्म अंशांशिभेदात् आत्मसामान्यं निहितं सङ्गुप्तम् इति गीयते। सा गुहा न पातालादि किन्तु ब्रह्मवृत्त्यविशिष्टां बुद्धिवृत्तिमेव कवयः पण्डिताः पश्यन्तीति। अविशिष्टता च परस्परं प्रतिविम्बनादुभयोरेव विषयाकारत्वचेतनसाम्यमित्युक्तम्। अतो विविच्य ग्रहणायोग्यतया अवस्थितिरेवात्मनः सङ्गोपनं बुद्धौ इति श्लोकतात्पर्य्यार्थः। तदेतत् एकाकारत्वमादित्यपुराणेऽप्युक्तम्

नित्यः सर्वगतो ह्यात्मा बुद्धिसन्निधिसत्तया।
यथा यथा भवेद्बुद्धिरात्मा तद्वदिहेष्यते॥

इति। ननु भवतु चितेः स्वबुद्धिसंवेदनं शब्दादिसंवेदनं तु कथं भवेत् बुद्धिवच्छब्दादीनामपि चितौ प्रतिविम्बनसामर्थ्याङ्गीकारे सर्वदैव सर्वार्थभानप्रसङ्गात्। कथं वा चितेः स्वसंवेदनम्। उक्ता हि अनवस्था चित्तवत् पुरुषेऽपि समानेत्याशङ्कानिरासायोत्तरसूत्रं प्रवर्त्तिष्यते तत्सूत्रं भाष्यकारः प्रकारान्तरेणापि उत्थापयति। अतश्चेति। अतो बुद्धिपुरुषयोर्वेद्यवेत्तृभावाच्च तदन्यथा-

नुपपत्तेश्चेति यावत्। एतत् आगामिसूत्रप्रतिपाद्यम्। अङ्गीक्रियत इत्यर्थः। चकारोऽस्मदुक्तप्रयोजनसमुच्चयार्थः ॥ २२ ॥

अतश्चैतदभ्युपगम्यते—

* द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ॥ २३ ॥ *

मनो हि मन्तव्येनार्थेनोपरक्तं ततः स्वयं च विषयत्वाद्विषयिणा पुरुषेण आत्मीयया वृत्त्याभिसम्बद्धं तदेतच्चित्तमेव द्रष्टृदृश्योपरक्तं विषयविषयिनिर्भासं चेतनाचेतनस्वरूपापन्नं विषयात्मकमप्यविषयात्मकमिवाचेतनं चेतनमिव स्फटिकमणिकल्पं सर्वार्थमिति उच्यते, तदनेन चित्तसारूप्येण भ्रान्ताः केचित्तदेव चेतनमित्याहुः अपरे चित्तमात्रमेवेदं सर्वं नास्ति खल्वयं गवादिर्घटादिश्च सकारणो लोक इति, अनुकम्पनीयास्ते, कस्मात्, अस्ति हि तेषां भ्रान्तिबीजं सर्वरूपाकारनिर्भासं चित्तमिति, समाधिप्रज्ञायां प्रज्ञेयोऽर्थः प्रतिबिम्बीभूतस्तस्यालम्बनीभूतत्वादन्यः, स चेदर्थश्चित्तमात्रं स्यात् कथं प्रज्ञयैव प्रज्ञारूपमवधार्य्येत, तस्मात् प्रतिबिम्बीभूतोऽर्थः प्रज्ञायां येनावधार्य्यते स पुरुष इति। एवं ग्रहीतृग्रहणग्राह्यस्वरूपचित्तभेदात् त्रयम-

**प्येतत् जातितः प्रविभजन्ते ते सम्यग्दर्शिनः तैरधिगतः पुरुष इति ॥ २३ ॥**

सर्वे ग्रहीतृग्रहणग्राह्याः पुरुषस्यार्थां भोग्या अस्मिन्निति सर्वार्थम्। अयं घट इत्यनन्तरं घटमहं जानामीति बुद्धेर्वृत्त्यन्तरस्य ग्रहीतृग्रहणग्राह्याकारस्यायं घट इति वृत्तिवदेव साक्षिभास्यस्य प्रायशो दर्शनात्। सर्वार्थत्वे हेतुः द्रष्टृदृश्योपरक्तमिति। द्रष्टृदृश्योभयाकारमित्यर्थः। बाधकं विना सन्निकृष्टवस्त्वाकारतास्वाभाव्यस्य चित्ते सर्वसम्मतत्वादिति भावः। तथा च बुद्धिसंवेदनमेव बुद्धिस्थस्य शब्दादेः स्वस्य च संवेदनं यद्वि शब्दादिपुरुषोभयाकारा बुद्धिवृत्तिः पुरुषे प्रतिविम्बिता भासते इदमेव शब्दादेः पुरुषस्य च दृश्यत्वं बुद्धेर्दृश्यत्ववदित्यतो न पुरुषदर्शनार्थं द्रष्ट्रन्तरापेक्षा नापि कर्मकर्तृविरोधोऽन्तःकरणद्वारत्वादिति भावः। एतेन सर्वार्थत्वेन भाष्यकारोक्तं बुद्धिपुरुषयोरविशिष्टाकारत्वमपि सिद्धम्। बुद्धेः पुरुषाकारतातिरेकेण पुरुषवत्त्वासम्भवात्। पुरुषस्य बुद्ध्याकारतायाश्च पूर्वसूत्रेणैवोक्तत्वादिति। वेद्यत्वान्यथानुपपत्त्या यः सिध्यति तं बुद्धौ पुरुषोपरागं प्रतिपादयन् समग्रसूत्रं व्याचष्टे। मनो हीति। उपरक्तं तदाकारम्। अन्यथा ग्रहणानुपपत्तेः। युक्तिपूर्वकं द्रष्टुपरागमाह। यत्स्वयं चेति। तन्मनः स्वयमपि पुरुषस्य विषयत्वात् स्वीयचैतन्यलक्षणवृत्तिविशिष्टेन पुरुषेण विषयिणा सम्बद्धम् आकारितं सन्निकर्षस्य ग्रहणहेतुत्वात्। बुद्धिवृत्तौ च पुरुषस्य असङ्गस्य प्रतिविम्बातिरेकेण अनित्यसन्निकर्षासम्भवादिति। तस्मात् एतच्चित्तमेवोभयोपरक्ततया शब्दादिविषयरूपेण विषयिपुरुषरूपेण च निर्भासते। साक्षिणि प्रतिविम्बितं सदिति विषयविषयिनिर्भासं, तत्र हेतुः चेतनाचेतनरूपापन्नं तदा-

कारम्। एतदेव विवृणोति। विषयात्मकमपि अविषयात्मकमिवेति अचेतनमपि चेतनमिवेति। इवशब्दार्थं दृष्टान्तेनाह। स्फटिकमणिकल्पमिति। यथा एक एव स्फटिकमणिः पार्श्वद्वयस्थयोर्जवेन्द्रनीलयोः प्रतिविम्बनात् स्वीयरूपेण सह त्रिरूप इव भवतीति। एवं चित्तमपि विषयात्मनोः प्रतिविम्बनात् ग्रहीतृग्रहणग्राह्यात्मकरूपत्रयवदिव भवति, अतः सर्वार्थमित्युच्यत इत्यर्थः। चित्तमिवेत्येवकारेण अन्येषां सन्निकर्षसत्त्वेऽपि आकारग्रहणसामर्थ्यं नास्तीत्युक्तम्। अत्र स्फटिकदृष्टान्तो न सर्वांशे बुद्धेः स्वार्थाकारपरिणामस्यैव स्वप्नानुरोधेनेष्टत्वात् स्फटिके च प्रतिविम्बमात्रस्य स्वीकारात्। किन्तु तत्तद्वस्तुसन्निकर्षेण तत्तद्रूपतया प्रतीयमानतामात्रांशे स्फटिकस्य दृष्टान्त इति मन्तव्यम्। यदेतदुक्तं चित्तस्य द्रष्टृदृश्यसारूप्यम् इदमेव भवबीजाविवेकस्य कारणमिति प्रतिपादयति। तदनेनेति। केचित् वाह्यार्थवादिनः चित्तातिरिक्तचेतनानभ्युपगन्तारो वैनाशिकाः। अपरे विज्ञानवादिनः। लोक्यत इति लोकः। तदुक्तं विज्ञानवादिभिः।

अभिन्नोऽपि हि बुद्ध्यात्मा विपर्य्यासित दर्शने।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते॥

इति। तेषाञ्च वादिनामयं भावः। चित्तस्य चेत् सर्वरूपता स्वीकृता तर्हि अलं पुरुषेण वाह्यार्थेन वा अनादिवासनावशात् स्वतएव चित्तस्यानन्तपरिणामस्वीकारसम्भवात्। दुग्धस्य दधिरूपतावदिति। अनुकम्पामुखेन तेषु समाधानमाह। अस्ति हीति। इत्यन्तं बीजमित्यर्थः। एतेन यदाधुनिका वेदान्तिब्रुवा आहुः। विषयदोषात् करणदोषाद्वा चैतन्ये भ्रमो न भवति विषयकरणदोषयोर्भ्रममात्रकल्पितत्वेन भ्रमात् पूर्वं तयोरभावात् अपि त्वनिर्वचनीयाविद्यामात्रादिति। तद्वे-

यम् । चैतन्येऽपि चित्तवदेव सकलवस्तुप्रतिविम्बेन सारूप्यस्यैव विषयगतदोषस्य प्रपञ्चारोपहेतुतालाभात् सर्ववस्तूनां भ्रममात्रकल्पितत्वस्य चासिद्धेः शुक्तिरजतादिस्थले क्लृप्तेन सारूप्यदोषेणैव अध्यासोपपत्तौ अध्यासहेतुतया तदभिप्रेतानाद्यविद्यायां कल्पनानवकाशाच्चेति । तत्रादौ विज्ञानवादिनं बोधयति । समाधीत्यादिना रूपमवधार्य्यत इत्यन्तेन । भ्रमस्थले ज्ञेयार्थस्य चित्तमात्रताया अस्माभिरभ्युपगमात् । समाधिप्रज्ञायां प्रज्ञेय इत्युक्तमर्थस्य सत्यत्वलाभाय । तथा चायमर्थः । विवादगोचरोऽर्थश्चित्ते प्रतिविम्बितो योऽनुभूयते स तस्य चित्तस्यालम्बनीभूतत्वाच्चित्तादन्यः । तत्र हेतुः । स चेदिति । स चेदर्थश्चित्ताकारमात्रं स्यात् कथं तर्हि प्रज्ञयैव प्रज्ञाकारो गृह्येत कर्मकर्तृविरोधात् पुरुषस्यानङ्गीकारात् । पुरुषप्रज्ञया पुरुषसिद्धिरर्थप्रज्ञया अर्थस्यापि सिद्धयौचित्यादिति । अतो विज्ञानातिरिक्तो विज्ञेयोऽर्थः सिद्धः । अनयैव युक्त्या पुरुषानभ्युपगन्तारं बाह्यार्थवादिनमपि बोधयति । तस्मादिति । तस्मात् प्रज्ञारूपस्य प्रज्ञाग्राह्यत्वाभावादेव प्रज्ञायां प्रतिविम्बीभूतः प्रतिविम्बरूपेण जातोऽर्थो ज्ञानाकारो येन गृह्यते स पुरुष इत्यपि सिद्धमित्यर्थः । ननु स्वसंगृहीत्वैव स्वस्य प्रज्ञारूपं गृह्णातु आकाशाग्रहणेऽपि शब्दवदिति चेन्न । शब्दवत् केवलस्य आकारस्याग्रहणात् । अयं घट इति ज्ञानमभूदित्यादिरूपेण रूपादिवद्धर्मिपुरस्कारेणैव आकारानुभवादिति । ननु कर्मकर्तृविरोधः सूत्रकारेणैवोक्तो न तत्स्वाभासमित्यनेन अतो भाष्यकारस्य पौनरुक्त्यमिति, मैवम् । तत्र चित्तस्य चित्तग्राह्यत्वं निराकृतमत्र चित्ताकारस्य चित्तग्राह्यत्वं निराक्रियते इति विशेषादिति । पुरुषचित्ततदर्थानां यथोक्तप्रकारैर्विवेकज्ञानमेव तत्त्वज्ञानमिति वेदान्तोक्तोपासनादिव्यावृत्त्यर्थं नास्तिकादिज्ञाननिरसनार्थं चावधारयति ।

एवं ग्रहीत्रिति। ग्रहीत्रादित्रितयं परस्परविजातीयतया ये विभजन्ति विवेचयन्ति तएव सम्यग्दर्शिनः तैरेव पुरुषो लब्धः। अन्ये तु भ्रान्ता इत्यर्थः। तथा च श्रुतिः।

यन्मनसा न मनुते येनाहुर्मनसो मतम्।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥

'अथात आदेशो नेति नेति' 'न ह्येतस्मादिति नेत्यन्यत्परमस्ती'त्यादिः। स्मृतिश्च।

अव्यक्ताद्ये विशेषान्ते विकारेऽस्मिंश्च वर्त्तिते।
चेतनाचेतनान्यत्वज्ञानेन ज्ञानमुच्यते॥

इत्यादि। 'आत्मैवेदं सर्वं' 'ब्रह्मैवेदं सर्वं' 'वासुदेवः सर्वमि'-त्यादिश्रुतिस्मृतयस्तु शक्तिशक्तिमदाद्यभेदेनैवोपासनार्थं प्रवर्त्तन्त इति न तद्विरोधः। एतेन जीवात्मप्रकरणेषु आत्मैक्यश्रुतीनामवैधर्म्यलक्षणाभेदेन विवेक एव तात्पर्य्यमिति द्रष्टव्यम्। विवेकज्ञानस्यैव सम्यग्ज्ञानतया मोक्षहेतुत्ववचनात्। परमात्मप्रकरणं तु जीवादपि विवेकेन परमात्मन एवस्यैव आत्मत्वे तात्पर्य्यमिति मन्तव्यम्। द्वितीयपादे विवेकख्यातिरविप्लवा हानोपाय इत्येवोक्तम्। अत्र तु विवेकज्ञानस्यैव सम्यग्ज्ञानत्वोपपादनेन मोक्षहेतुत्वं प्रभाषितम्। विवेकस्वरूपं च परीक्ष्यत इति विवेकः। चित्तादात्मविवेके हेत्वन्तरप्रदर्शकतया सूत्रमवतारयति। इतश्चेति। इतश्च चित्तातिरिक्तः पुरुष इति शेषः॥ २३॥

कुतश्चैतत्,—

* तदसङ्ख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात्॥ २४॥ *

तदेतच्चित्तमसङ्ख्येयाभिर्वासनाभिरेव चित्री-

कृतमपि परार्थं परस्य भोगापवर्गार्थं न स्वार्थं संहत्यकारित्वाद् गृहवत्, संहत्यकारिणा चित्तेन न स्वार्थेन भवितव्यं, न सुखचित्तं सुखार्थं न ज्ञानं ज्ञानार्थम्, उभयमप्येतत्परार्थं, यश्च भोगेनापवर्गेण चार्थेनार्थवान् पुरुषः स एव परो न परः सामान्यमात्रं, यत् तु किञ्चित्परं सामान्यमात्रं स्वरूपेणोदाहरेद्वैनाशिकस्तत्सर्वं संहत्यकारित्वात् परार्थमेव स्यात्, यस्त्वसौ परो विशेषः स न संहत्यकारी पुरुष इति ॥ २४ ॥

यदुक्तं चित्तस्य सर्वात्मकत्वाङ्गीकारे असंख्यवासनावशात् स्वतएव चित्तस्यापि परिणामोऽस्तु किं पुरुषेणेति। तन्न। यतस्तच्चित्तमसंख्येयवासनाभिश्चित्रितमपि परार्थं परस्यान्यस्य भोगापवर्गायैव विना तौ न स्थातुं परिणमितुं वा क्षमते संहत्यकारिपदार्थानां लोके परमात्रार्थत्वदर्शनादित्यर्थः। तथा च पुरुषार्थसमाप्तौ चित्तविलयेन मोक्षोपपत्तिरित्यत्रापि सूत्रतात्पर्य्यम्। सूत्रं व्याचष्टे। तदेतदिति। भोगावर्गार्थं सुखादिसाक्षात्कारार्थम्। संहत्यकारित्वात् इतरसाहाय्येनार्थक्रियाकारित्वात् गृहवदिति। गृहं हि शयनादिकार्य्यमास्तरणशरीरादिसाहाय्येनैव करोति पुरुषस्तु नित्यचैतन्यरूपतया चैतन्यार्थं नान्यमपेक्षते अन्या चार्थक्रिया पुरुषस्य नास्तीति स न संहत्यकारीत्याशयः। यत्तु सङ्घातपारार्थ्यादिति सांख्ये प्रोक्तम्। तत्र संहननमारम्भकसंयोगो विवक्षितः स चावयवावयव्यभेदात् शय्यासनगृहादिषु सत्त्वादिषु चास्ति न तु पुरुष इति। ननु चित्तं

संहत्यापि करिष्यति स्वार्थमपि भविष्यति कः खलु विपक्षबाधक-स्तर्क इत्याकाङ्क्षायामाह। संहत्यकारित्वेति। न सुखचित्तमिति सुखचित्तं भोगचित्तं न सुखार्थं न चित्तस्य भोगार्थं तथा तत्त्व-ज्ञानचित्तमपवर्गचित्तं न चित्तस्यापवर्गार्थं चित्तस्य भोगापवर्ग-योरपि कार्य्यतया सार्थकत्वनियमेन अनवस्थाप्रसङ्गात्। यत्कार्य्यं तत्सार्थकमिति हि सर्वसम्मतम्। अतश्चित्तस्यैतदुभयमपि परार्थ-मित्यर्थः। पुरुषस्य च भोगापवर्गौ स्वरूपचैतन्यरूपतया न कार्य्यौ इति न अनवस्था पुरुषार्थत्ववादिनामिति भावः। पुरुषस्य भोगो हि सुखादिसाक्षात्कारः। अपवर्गश्च विवेकख्यातिसाक्षात्कारो वा स्वरूपावस्थानो वा सर्वथैव चैतन्यमात्रा एव अपरिणामित्वात् निर्द्धर्मत्वाच्चेति। ननु परार्थतामात्रेण न पुरुषसिद्धिर्विनाशादी-नामपि परार्थत्वसम्भवात् विनाशार्थमेवोत्पत्तेः परैरभ्युपगमा-दित्याशङ्कायामाह। यश्चेति। भोगापवर्गार्थवान् एवात्र परः साध्ये प्रविष्टोऽतो न सामान्येन येन केनचित्परेण सिद्धसाधन-मर्थान्तरं चेत्यर्थः। स्वोत्तरोत्पन्नक्षणिकचित्तस्य भोगार्थकतया पराभिप्रेतं सिद्धसाधनमपाकरोति। यत्तु किञ्चिदिति। स्वरू-पेण आत्मरूपेण भोक्तृतयेति यावत्। यस्त्विति। यस्त्वसौ विशेषः पुरुषाख्यः परः स कूटस्थनित्यत्वात् न संहत्यकारीति न तस्य परार्थत्वापत्त्यानवस्थितिरित्यर्थः। तदेवं बुद्धिपुरुषविषयाणां विवेकं प्रदर्श्य एतज्ज्ञानादाद्यं मोक्षमादौ प्रतिपादयति ॥ २४ ॥

* विशेषदर्शिन आत्मभावभावनाविनि-वृत्तिः ॥ २५ ॥ *

यथा प्रावृषि तृणाङ्कुरस्योद्भेदेन तद्बीजसत्ता-नुमीयते तथा मोक्षमार्गश्रवणेन यस्य रोमहर्षा-

श्रुपातौ दृश्येते तत्राप्यस्ति विशेषदर्शनवीजमपवर्गभागीयं कर्माभिनिर्वर्त्तितमित्यनुमीयते, तस्य आत्मभावभावना स्वभाविकी प्रवर्त्तते, यस्याभावादिदमुक्तं स्वभावं मुक्त्वा दोषाद् येषां पूर्वपक्षे रुचिर्भवति अरुचिश्च निर्णये भवति तत्र आत्मभावभावना कोऽहमासं कथमहमासं किंस्विद् इदं कथंस्विदिदं के भविष्यामः कथं वा भविष्याम इति, सा तु विशेषदर्शिनो निवर्त्तते, कुतः, चित्तस्यैव विचित्रः परिणामः, पुरुषस्त्वसत्यामविद्यायां शुद्धश्चित्तधर्मैरपरामृष्ट इति, ततोऽस्य आत्मभावभावना कुशलस्य निवर्त्तत इति ॥ २५ ॥

मातृमानमेयात्मकस्याखिलप्रपञ्चस्य तमाय:पिण्डवदेकीभावापन्नस्य यथोक्तप्रकारैरन्योन्यं विशेषदर्शिनो विवेकसाक्षात्कारिणश्चित्तस्यात्मभावे भावना स्वसत्ताजिज्ञासा कोऽहमासमित्यादिरूपा भाष्ये व्याख्येया। तस्या भयशोकप्रवृत्तिनिवृत्त्याद्यनर्थहेतोर्निवृत्तिराद्यो मोक्षो भवतीत्यर्थः। स्वर्गनरकमोक्षादिभिर्हि विचित्ररूपता चित्तस्यैव भवति न तु सदैकरूपचिन्मात्रस्य न ममेत्यवधारणे सति नैवात्मभावचिन्तोदेतीति भावः। तथाच श्रुतिः। 'एतं ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरव'मितीत्यादिः।' तदेतदुक्तं पञ्चशिखाचार्य्यैः'राद्यस्तु मोक्षो ज्ञानेनेति। अत्रादौ भाष्यकार आत्मभावभावनामिव

सकारणां प्रतिपादयति। यथेत्यादिना। तत्रापीति। पुरुष इति शेषः। विशेषदर्शनबीजमिति। आत्मभावजिज्ञासाद्वारेति शेषः। इत्यनुमीयत इति। विविदिषन्ति यज्ञेनेत्यादिश्रुतेः। पापक्षयात् शुद्धमतिर्वाञ्छेति ज्ञानमुत्तममिति स्मृतेश्चेति शेषः। तस्य यथोक्तकर्मवतः स्वाभाविकी ऐहिकसाधननिरपेक्षा, तथाच यथोक्तं कर्म आत्मभावनायाः कारणम्। तत्र च नैहिकत्वनियम इत्यायातम्। ऐहिकसाधनशून्यस्य प्राक्तनतथाविधकर्माभावे च सा भावना नोदेति प्रत्युत देहाद्यात्मतायामेकरुचिर्भवतीति, अत्र पूर्वाचार्य्यवाक्यं प्रमाणयति। यस्याभावादिति। यस्य कर्मणो भावादिदं वक्ष्यमाणं फलमुक्तं पूर्वाचार्य्यैः। तदेवाह। स्वभावमिति। स्वभावमात्मभावं त्यक्त्वा एषां सत्कर्मशून्यानां पूर्वपक्षे नित्यदेहाद्यात्मतायामेव रुचिः श्रद्धातिशयो भवति। अरुचिश्च तत्त्वनिर्णय इत्यर्थः। आत्मभावनायाः कारणमुक्त्वा स्वरूपमाह। तत्रात्मेति। कोऽहमासं किं नरादिरूप आसं कथमासं दुःखेन दंशनवासं किंस्विदिदं वर्त्तमानमपि मम स्वरूपं किं देहो वा मन आदिर्वा कथंस्विदिदं केन वा प्रकारेण पुण्यपापादिना तिष्ठतीत्यादिरर्थः। के भविष्याम इत्याद्येकत्व एव बहुवचनं, तथाच यज्जिज्ञासीत्थभयादिनिवृत्तये विशेषदर्शनं पुरुषः सम्पादयति सैवात्मभावनेत्यर्थः। आत्मभावनामशेषतो व्याख्याय सूत्रवाक्यार्थमाह। सा त्विति। विशेषदर्शनात्कुतो निवृत्तिरिति प्रश्नस्योत्तरमाह। चित्तस्येति। एष भावरूपो विचित्रः परिणाम आत्मनो न भवति किन्तु चित्तस्यैवाविद्याजन्यत्वात् अविद्यायाश्च चित्तधर्मत्वात् पुरुषस्त्वविद्याशून्यत्वाच्छुद्धः पापपुण्यविवर्जितः। ततश्च चित्तधर्मैर्जन्ममरणसुखदुःखादिभिरपरामृष्टः कदाप्यसम्बद्ध इति। तत इति विशेषदर्शनादस्य कुशलस्यात्मभावना निवर्त्तत इत्यर्थः। तन्निवृत्तेः स्वर्ग-

नरकादिषु रागद्वेषादिनिवृत्तिः फलमिति। तस्य विशेषदर्शिनो लक्षणं सम्प्रज्ञातयोगं वक्ष्यमाणमुक्तेश्च कारणभूतमाह॥ २५॥

* तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥ २६॥ *

तदानीं यदस्य चित्तं विषयप्राग्भारमज्ञाननिम्नमासीत्तदस्य अन्यथा भवति, कैवल्यप्राग्भारं विवेकजज्ञाननिम्नमिति॥ २६॥

कैवल्ये प्राग्भारो यस्य तत्कैवल्यप्राग्भारम्। कैवल्याभिमुखमिति यावत्, व्याचष्टे। तदानीमिति। तदानीं विशेषदर्शनावस्थायां स्वर्गादिवैराग्यवशात् चित्तमन्यथा भवतीत्यनेनान्वयः। विषयप्राग्भारं विषयाभिमुखम् अज्ञाननिम्नमज्ञानमार्गसञ्चारि एवमुत्तरत्र, न चानेन कोमलकण्टकवत् उत्पन्नमात्रेण विशेषदर्शनेनैव कृतकृत्यता भवति पूर्वसंस्कारवशात् अन्तरान्तरा मोहाख्यानां भवदुःखवीजवृत्तीनामनुवृत्तेरित्याह॥ २६॥

* तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २७॥ *

प्रत्ययविवेकनिम्नस्य सत्त्वपुरुषान्यताख्यातिमात्रप्रवाहिणश्चित्तस्य तच्छिद्रेषु प्रत्ययान्तराणि अस्मीति वा, ममेति वा, जानामीति वा, न जानामीति वा। कुतः, क्षीयमाणवीजेभ्यः पूर्वसंस्कारेभ्य इति॥ २७॥

व्याचष्टे। विवेकेति। विवेकप्रत्ययनिम्नस्येत्यस्य विवरणं

सत्त्वेत्यादि। सत्त्वपुरुषान्यतामात्रेण प्रवहणशीलस्येत्यर्थः। तच्छिद्रेषु स्थानेषु अविद्यारूपाणां प्रत्ययानामाकारा अस्मीत्याद्याश्च प्रदर्शिताः। अस्मीति। देवमनुष्यादिरूपोऽस्मीत्यर्थः। केवलास्मितायाः सम्प्रज्ञातयोगेऽपि सत्त्वात् चीयमाणेभ्यो बीजेभ्यः चीयमाणबीजेभ्यः। एतस्य विशेष्यं पूर्वसंस्कारेभ्य इति। ननु ज्ञाने जातेऽपि चेत् पूर्वसंस्कारवशात् व्युत्थानदशायां कदाचिदविद्योदयः कथं तर्हि सम्प्रज्ञातप्रवाहेणापि अविद्यानिवृत्तिः स्यात् तत्राह ॥ २७ ॥

* हानमेषां क्लेशवदुक्तम् ॥ २८ ॥ *

यथा क्लेशा दग्धबीजभावा न प्ररोहसमर्था भवन्ति तथा ज्ञानाग्निना दग्धबीजभावः पूर्वसंस्कारो न प्रत्ययप्रसूर्भवति, ज्ञानसंस्कारास्तु चित्ताधिकारसमाप्तिमनुशेरत इति न चिन्त्यन्ते ॥ २८ ॥

एषां संस्काराणां हानं दाहः स्वकार्य्यासामर्थ्यं क्लेशानामिवोक्तं पूर्वाचार्य्यैरित्यर्थः। 'ध्यानहेयास्तद्वृत्तयः' 'ते प्रतिप्रसवहेयाः सूक्ष्मा' इति सूत्राभ्यां स्थूलसूक्ष्मक्लेशानां तत्त्वज्ञानचित्तलयाभ्यां दाहनाशौ प्रोक्तौ तथा तत्संस्काराणामपीति फलितार्थः। एतदेव व्याचष्टे। यथेति। यथा सम्प्रज्ञातयोगिनो व्युत्थानदशायां पूर्वसंस्कारजाः क्लेशा अविद्यादिवृत्तयो दग्धबीजतुल्याः सत्यो न संस्कारं जनयन्ति तथा पूर्वसंस्कारा अपि सम्प्रज्ञातपरम्पराजनितेन निष्ठारूपेण ज्ञानाग्निना दग्धबीजतुल्याः सन्तः प्रत्ययं न प्रसवत इत्यर्थः। पूर्वसंस्कारः प्राचीनः क्लेशसंस्कारः ज्ञानकाले ज्ञानसंस्कारेण प्रतिबन्धात् संस्कारो

नोत्पद्यत इत्याशयेन पूर्वपदम्। अत्र ज्ञाननाशोऽपि क्लेश-वदुपलक्षित इति। ननु एकदा चेद्दृष्टं मम जन्म मरणं दुःखा-दिकं नास्तीति तर्हि कदाचिदन्तरान्तरा मोहेऽपि तन्नाशार्थं प्रवृत्तिर्नोपपद्यते मोहस्यापि चित्तधर्मतायाः पूर्वं निश्चितत्वा-दिति चेन्न। चित्तस्य मोहसत्त्वे पुनश्चित्तस्य भवदुःखोत्पत्त्या पुरुषस्य दुःखभोगः स्यादित्याशयेनैव ज्ञानिभिरपि चित्तस्यात्य-न्ततो मोहनिवृत्त्यर्थं यतनात् भोगश्च चिन्मात्रस्यैवेत्यसकृदा-वेदितमिति। ननु संस्कारत्वाविशेषात् तत्त्वज्ञानसंस्कारा अपि किं सम्प्रज्ञातनिष्ठया नश्यन्ति, नेत्याह। ज्ञानसंस्कारास्त्विति। अविरुद्धत्वादिति शेषः। तर्हि कथं तेषां नाशः स्यादिति, तत्राह। इति तच्चिन्त्यन्त इति। अधिकारसमाप्तौ चित्तेन सहैव तेषां नाशात् तत्साधनचिन्ता नास्तीत्यर्थः। आशु मुमुक्षूणां त्वसम्प्रज्ञातेनापि तन्नाशश्चिन्तित इति भावः। उक्तस्य संस्कार-हानस्य प्रकारमाह सूत्रद्वयेन॥ २८॥

* प्रसङ्ख्यानेऽप्यकुसीदस्य सर्वथा विवेक-ख्यातेर्धर्ममेघः समाधिः॥ २९॥ *

यदायं ब्राह्मणः प्रसङ्ख्यानेऽप्यकुसीदः ततो-ऽपि न किञ्चित्प्रार्थयते, तत्रापि विरक्तस्य सर्वथा विवेकख्यातिरेव भवतीति, संस्कारबीजक्षया-न्नास्य प्रत्ययान्तराणि उत्पद्यन्ते, तदा अस्य धर्म-मेघो नाम समाधिर्भवति॥ २९॥

प्रसंख्यानं विवेकसाक्षात्कारः तत्रापि योऽकुसीदः कृषी-वलवत् सर्वभावाधिष्ठातृत्वादिरूपां सिद्धिं न प्रार्थयते तस्य योगविघ्नाभावेन सर्वथा निरन्तरं विवेकख्यात्युदयाद् धर्ममेघः

नाम्नी सम्प्रज्ञातयोगस्य परा काष्ठा भवतीत्यर्थः। तदेतद्व्याचष्टे। यदेति। तत्रापि तत्फलेऽपि, सर्वथाशब्दार्थमाह। संस्कारेति। संस्काररूपस्य वीजस्य क्रमेण क्षयात् दाहात् हीयमानात् हेतोः प्रत्ययान्तराणि अविद्यान्तराणि यदा न जायन्ते तदा धर्ममेघसमाधिरित्यर्थः। क्लेशकर्मादीनां निःशेषेणोन्मूलकं धर्मं मेहति वर्षतीति धर्ममेघः। अस्याः समाधेर्धर्मद्वारकफलं द्वितीयमोक्षमाह ॥ २९ ॥

* ततः क्लेशकर्मनिवृत्तिः ॥ ३० ॥ *

तल्लाभादविद्यादयः क्लेशाः समूलकाषं कषिता भवन्ति, कुशलाकुशलाश्च कर्माशयाः समूलघातं हता भवन्ति, क्लेशकर्मनिवृत्तौ जीवन्नेव विद्वान् विमुक्तो भवति, कस्मात्, यस्माद्विपर्य्ययो भवस्य कारणं, न हि क्षीणविपर्य्ययः कश्चित् केनचित् क्वचिज्जातो दृश्यत इति ॥३०॥

निवृत्तिर्दाहसमाप्तिः, व्याचष्टे। तल्लाभादिति। समूलकाषमिति। मूलं क्लेशसंस्कारास्तैः सह क्लेशा अभिनिवेशातिरिक्ताश्छिन्ना भवन्ति अतएव कर्माशयाश्च प्रारब्धातिरिक्ताः क्लेशाख्यमूलेन सह हताः स्युरतो न पुनरुत्पद्यन्त इत्यर्थः। ननु दुःखात्यन्तनिवृत्तिरेव मोक्षो जीवतश्च अवश्यं दुःखम्। 'न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति' इति श्रुतेः, तत्कथं जीवन्मुक्तिरित्याशयेन पृच्छति। कस्मादिति। उत्तरं, यस्मादिति। तथा च दुःखनिदानात्यन्तोच्छेदस्य गौणमुक्तित्वमिति भावः। अत्र प्रमाणमनुपलब्धिमाह। न हीति। तदुक्तं गौतमाचार्य्यैः 'वीतरागजन्मादर्शना'दिति। अयमपि मोक्षः पञ्चशिखाचार्य्यै-

क्तो द्वितीयो रागक्षयादिति। अत्र जीवन्मुक्तस्य सवासनक्लेशात्यन्तदाहनिर्णयात् आधुनिकवेदान्तिनामविद्यालेशस्वीकारोऽविद्यामूलक एवेति स्मर्त्तव्यम्। इदानीमुक्तस्य जीवन्मुक्तस्य परममुक्तिप्रकारमाह सूत्रद्वयेन ॥ ३० ॥

* तदा सर्वावरणमलापेतस्य ज्ञानस्य आनन्त्याज्ज्ञेयमल्पम् ॥ ३१ ॥ *

सर्वैः क्लेशकर्मावरणैर्विमुक्तस्य ज्ञानस्य आनन्त्यं भवति, आवरकेण तमसा अभिभूतमावृतज्ञानसत्त्वं क्वचिदेव रजसा प्रवर्त्तितमुद्घाटितं ग्रहणसमर्थं भवति, तत्र यदा सर्वैरावरणमलैरपगतमलं भवति तदा भवति तस्य आनन्त्यं, ज्ञानस्य आनन्त्यात् ज्ञेयमल्पं सम्पद्यते, यथा आकाशे खद्योतः, यत्रेदमुक्तं अन्धो मणिमविध्यत्तमनङ्गुलिरावयत्। अग्रीवस्तं प्रत्यमुञ्चत्तमजिह्वोऽभ्यपूजयत् प्रति ॥ ३१ ॥

तदा तस्यां जीवन्मुक्तावस्थायां क्लेशकर्मणोर्ज्ञानावरकमलयोरपगमेन हेतुना ज्ञानस्य सत्त्वप्रकाशस्यानन्त्यात् विभुत्वात् ज्ञेयं प्रकाश्यमल्पं तदपेक्षया भवतीत्यर्थः। यदि हि पञ्चविंशतितत्त्वातिरिक्तमन्यदपि वस्तु तिष्ठेत् तदा तदपि प्रकाश्येत ज्ञेयस्यैव तु अल्पतया अन्यन्न प्रकाश्यते नतु सत्त्वस्याल्पतयेति भावः। तदेतद्व्याचष्टे। सर्वैरिति। अनन्तं स्वभावतो व्यापकं ज्ञानसत्त्वमिति भूतसत्त्वव्यावर्त्तनायोक्तं प्रवर्त्तितमिति अस्य विवरणम् सुघाटितमिति। शेषं भाष्यं सुगमम्। अत्र तमोऽभि-

भवनानन्तरमेव वृत्त्युत्पत्तिवचनाद्वृत्तेस्तमोनाशकत्वमाधुनिकवेदान्तिनामपसिद्धान्त इति स्मर्त्तव्यम्। एतादृशं सर्वज्ञत्वं लोकेऽतीवाश्चर्य्यमन्धमणिवेधादिवदिति बौद्धोपहासमुखेन दर्शयति। यत्रेदमिति। यत्र क्षुद्राणामपि जीवानां योगबलात् एतादृशसार्वज्ञे बौद्धैरिदं दृष्टान्तजातमसम्भवदर्शनायोक्तमुपहसद्भिरित्यर्थः। किं तत् तदाह। अन्ध इत्यादि। अविध्यत् सच्छिद्रमकरोत् तं मणिमङ्गुलिहीनोऽवावयत् ग्रथितवान् तं मणिं ग्रीवाशून्यः प्रत्यमुञ्चत कण्ठाभरणमकरोत् तं कण्ठाभरणं जिह्वाशून्यः स्तुतवानितीत्यर्थः। दृष्टान्तचतुष्टयस्यायमाशयः। अनाद्यविद्यामूढ़चित्तैः सांख्याद्यभिमतसूक्ष्मार्थानामवधारणरूपं वेधनमेवादावशक्यं ततश्च तस्य सूक्ष्मार्थस्य अविरलवृत्तिसन्तानसूत्रेण ग्रथनमपि अशक्यम्। ततोऽपि सर्वथा विवेकख्यातिरतीव अशक्या ततश्च तादृशचित्तस्य परिपूर्णज्ञानत्वेन स्तुतिरपि अशक्येति। आस्तिकैस्तु श्रुतिस्मृतिप्रामाण्येन एतत्सर्वं श्रद्धेयमिति भावः। यथोक्तसार्वज्ञात् परवैराग्योदयेन असम्प्रज्ञातपरम्पराजन्यं प्रारब्धभोगसमाप्तिजन्यं वा तृतीयं मुख्यमोक्षमाह ॥ ३१ ॥

*** ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥ ३२ ॥ ***

**तस्य धर्ममेघस्योदयात् कृतार्थानां गुणानां परिणामक्रमः परिसमाप्यते, न कृतभोगापवर्गाः परिसमाप्तक्रमाः क्षणमप्यवस्थातुमुत्सहन्ते ॥३२॥**

ततो धर्ममेघोदयात् क्लेशकर्मनिवृत्त्या ज्ञानस्यानन्त्ये सति परवैराग्येन पुरुषार्थसमाप्त्या कृतार्थान् पुरुषान् प्रति गुणानां सत्त्वादीनां परिणामक्रमः समाप्यते कृतार्थपुरुषाणां भोगोप-

यिकः परिणामः पुनर्न भवतीत्यर्थः । क्रमश्च अविरलाधारेत्युत्तरसूत्रेण व्याख्यास्यते । तत इतिपदं व्याचष्टे । तस्य धर्ममेघस्य उदयादिति । कृतार्थानामिति । पुरुषाणामिति शेषः । तथा च कृतार्थपुरुषस्वामिको गुणानां परिणामक्रमः समाप्यत इत्यर्थः । न तु गुणानामखिलस्य परिणामक्रमस्य समाप्तिरत्रोक्ता कृतार्थं प्रति नष्टमप्यनष्टमित्युत्तरसूत्रादिति । ससाप्तौ हेतुमाह । न हीति । न हि सत्त्वादयो गुणाः कृतभोगापवर्गा अतएव समाप्तक्रमाः तं पुरुषं प्रति क्षणमप्यवस्थातुं समर्थाः स्थितिहेतुपुरुषार्थाभावादिति । यदि च सूत्रभाष्ययोर्गुणशब्देनात्र बुद्ध्यादय एव पुरुषोपकरणानि उच्यन्ते तदा यथाश्रुतमेव व्याख्येयम् । अत्र अचेतनानां चेतनार्थतया चैतन्याधीनसत्ता वेदान्तिभिरुच्यमाना सिद्धेति स्मर्त्तव्यम् । इयमपि तृतीया मुक्तिः पञ्चशिखाचार्य्यैरुक्ता 'कर्मक्षयात् तृतीयस्तु व्याख्यातं मोक्षलक्षण'मिति । अतएव तत्त्वसमाससूत्रं 'त्रिविधो मोक्ष' इति । इदमत्रावधेयम् । यदेताभ्यां सूत्राभ्यां ज्ञानस्य आनन्त्यात् सार्वज्ञ्याख्यात् मोक्ष उच्यते इदं मुख्यकल्पाभिप्रायेणोक्तं वैराग्यादेव सुखेन मोक्षसिद्धेः, न तु सार्वज्ञ्यादिकं विना मोक्षो न भवतीत्याशयेन । यतः सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति सूत्रे भाष्यकृता ईश्वरस्यानीश्वरस्य प्राप्तविवेकज्ञानस्येतरस्य वा इत्यनेनासर्वज्ञस्यापि अभिमाननिवृत्तिमात्रादेव मोक्ष उक्त इति । तथा चोक्तं 'विवेकख्यातिरविप्लवा हानोपाय' इति । 'सति मूले तद्विपाको जात्यायुर्भोगा' इति च । संसारबीजं हि अनात्मनि आत्मरूपा अविद्या रागद्वेषधर्माधर्मतद्विपाकादिहेतुत्वात् सा चेद्विवेकख्यात्या नाशिता तर्हि तत एव संसारोच्छेदे सार्वज्ञ्याद्यपेक्षा नास्तीति । तथा च विष्णुपुराणम्

अनात्मन्यात्मबुद्धिर्याऽनर्थे स्वमिति या मतिः ।

अविद्यातरुसंसूतिवीजमेतद्द्विधा स्थितम् ॥

इति। ननु परिणामसमाप्तिरिति वक्तव्ये क्रमशब्दः परिणामानां प्रतिक्षणमुत्पादविनाशकथनेन वैराग्योत्पादनाय प्रयुक्तः। स चायमर्थः कथं क्रमशब्दाल्लभ्यते क्रमशब्दस्य पौर्वापर्य्यमात्रवाचित्वादित्याशयेन क्रमशब्दार्थं पृच्छति। अथेति। अयमेतत्सूत्रीयः। अत्र प्रत्युत्तरं सूत्रम् ॥ ३२ ॥

अथ कोऽयं क्रमो नामेति,

* क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥ ३३ ॥ *

क्षणानन्तर्य्यात्मा परिणामस्य अपरान्तेन अवसानेन गृह्यते क्रमः नह्यननुभूतक्रमक्षणा नवस्य पुराणता वस्त्रस्यान्ते भवति, नित्येषु च क्रमो दृष्टः, द्वयी चेयं नित्यता कूटस्थनित्यता परिणामिनित्यता च, तत्र कूटस्थनित्यता पुरुषस्य, परिणामिनित्यता गुणानां, यस्मिन् परिणम्यमाने तत्त्वं न विहन्यते तन्नित्यम्, उभयस्य च तत्त्वानभिघातान्नित्यत्वम्, तत्र गुणधर्मेषु बुद्ध्यादिषु परिणामापरान्तनिर्ग्राह्यः क्रमो लब्धपर्य्यवसानो, नित्येषु धर्मिषु गुणेषु अलब्धपर्य्यवसानः, कूटस्थनित्येषु स्वरूपमात्रप्रतिष्ठेषु मुक्तपुरुषेषु स्वरूपास्तिता क्रमेणैवानुभूयत इति तत्राप्यलब्धपर्य्यवसानः शब्दपृष्ठेनास्तिक्रियामुपादाय कल्पित

इति । अथास्य संसारस्य स्थित्या गत्या च गुणेषु वर्त्तमानस्यास्ति क्रमसमाप्तिर्न वेति । अवचनीयमेतत्, कथम् अस्ति प्रश्न एकान्तवचनीयः सर्वो जातो मरिष्यति, ॐ भो इति । अथ सर्वो मृत्वा जनिष्यत इति विभज्य वचनीयमेतत् प्रत्युदितख्यातिः क्षीणतृष्णः कुशलो न जनिष्यत इतरस्तु जनिष्यते । तथा मनुष्यजातिः श्रेयसी न वा श्रेयसीत्येवं परिपृष्टे विभज्य वचनीयः प्रश्नः, पशूनुद्दिश्य श्रेयसी देवानृषींश्चाधिकृत्य नेति । अयं तु अवचनीयः प्रश्नः संसारोऽयमन्तवानथानन्त इति, कुशलस्यास्ति संसारक्रमसमाप्तिर्नेतरस्येति, अन्यतरावधारणेऽदोषः, तस्माद् व्याकरणीय एवायं प्रश्न इति ॥ ३३ ॥

क्षणप्रतियोगी क्षणस्य अवसरस्य विरोधी क्षणेनापि अनन्तरित इति यावत् । एवंरूपोऽत्र क्रमो विवक्षितो न तु पौर्वापर्य्यमात्रमिति विशेष्यदलार्थः । परिणामस्य पूर्वधर्मापाये धर्मान्तरोत्पत्तिरित्युक्तमेव ईदृशे च क्रमे प्रमाणप्रदर्शनपरं परिणामापरान्तनिर्ग्राह्य इति विशेषणम् । भाष्यकारस्तु क्षणप्रतियोगीत्यस्य पर्य्यवसितमर्थमाह । क्षणानन्तर्य्यात्मेति । क्रम इत्युत्तरेणान्वयः क्षणानन्तर्य्यात्मा क्षणानन्तर्य्यधर्मकः । आनन्तर्य्यं चाव्यवधानं क्रमस्तु पूर्वापरीभावः । तथा च क्षणाव्यवहितपरिणामधारा पूर्वसूत्रे परिणामक्रमशब्दार्थः । अनवच्छिन्न;

धारायाः प्रमाणप्रदर्शकं सूत्रावयवं व्याचष्टे। परिणामस्येति। पूर्वान्तापेक्षया वस्त्रादिरूपस्य परिणामस्य अपरान्तेन चरमावस्थया अनवच्छिन्नपरिणामधारा अनुमीयत इत्यर्थः। अत्र युक्तिमाह। न हीति। अननुभूतोऽप्राप्तो यथोक्तक्रमो यैरेवम्भूताः क्षणा यस्याः सा अननुभूतक्रमक्षणा पुराणता, तथा च वस्त्रस्य अन्तकाले दृश्यमाना पुराणता न हि अननुभूतक्रमक्षणा सम्भवतीत्यर्थः। अतः पुराणतायाः सूक्ष्मतमसूक्ष्मतरसूक्ष्मस्थूलादिरूपैः परिणामक्षणेषु अविरलः क्रमोऽनुमीयत इति। ननु अपरान्तेन अनित्येष्वेव क्रमः सिद्धो न तु प्रधानेऽपि तस्य चरमावस्थाया अभावात् अतो गुणानां परिणामक्रमे किं प्रमाणं येन तत्समाप्तिः पूर्वसूत्रोक्ता घटेत तत्राह। नित्येषु चेति। नित्येषु स्वतोऽपरान्ताभावेऽपि विकाराणामपरान्तैरेव प्रतिक्षणपरिणामो दृष्टोऽनुमित इत्यर्थः। धर्मिविक्रिया एवैषा धर्मद्वारा प्रपञ्च्यत इति प्रागुक्तत्वादिति भावः। ननु परिणामक्रमाङ्गीकारे नित्यत्वहानिरित्याशङ्कायामाह। द्वयी चेति। तथा च परिणामित्वेन कूटस्थनित्यतैव विरुध्यते न नित्यतासामान्यमित्याशयः। नित्यस्य सामान्यलक्षणमाह। यस्मिन्निति। तत्त्वं न विहन्यते स्वरूपं नातीतं भवति अत्र च अतीतताशून्यत्वमात्रं नित्यस्य सामान्यलक्षणमिति बोध्यम्। तच्चोभयसाधारणमित्याह। उभयस्येति। गुणपुरुषयोरित्यर्थः। पूर्वसूत्रे परिणामशब्देन व्यावर्त्त्यं स्वरूपास्तिताक्रमं दर्शयितुं क्रमसामान्यं विभजते। तत्रेति। बुद्ध्यादिषु महदादिषु लब्धपर्य्यवसानो विनाशित्वादित्यर्थः। गुणेषु इति। अत्रापि परिणामापरान्तनिर्ग्राह्य इत्यन्वेति। परिणामस्य क्रमं द्विधा व्याख्याय तृतीयं स्वरूपास्तितायाः क्रममसङ्कीर्णोदाहरणेनाह। कूटस्थेति। बद्धानां चित्ताविवेकेन कदाचित्परिणामाध्यासोऽपि स्यादित्याशयेन स्वरूपमात्र-

प्रतिष्ठेष्वित्युक्तं तस्यैव स्वरूपाख्यानं मुक्तपुरुषेषु इति। स्वरूपा-
स्तिता च तत्तत्क्षणमात्रं तत्क्रमस्य पुरुषेषु अप्यस्ति। इदानीं
स्थित्वा पश्चात् स्थास्यतीति व्यवहारात्। अन्यथा सर्वकालस-
म्बन्धरूपनित्यतानुपपत्तेश्चेत्यतस्तत्रापि अलब्धपर्य्यवसान इति,
क्रम इति शेषः। नन्वेवमात्मनोऽपि अस्तिताक्रमस्वीकारे
षड्भावविकारशून्यत्वसिद्धान्तविरोध इत्याशङ्कां परिहरति।
शब्दपृष्ठेनेति। स च क्रमोऽस्त्याख्यक्रियामादायैव शब्दपृष्ठेन
शब्दानुसारिणा व्यवहर्त्रा कल्पितो भवति। न तु जन्मोत्तरका-
लीनमस्तितापरिणाममादायेत्यर्थः। तथा च अस्तित्वाख्यक्रियैव
षड्भावविकारान्तर्गता पुरुषे निषिद्धेत्याशयः। सा च क्रिया-
रूपिणि अस्तिता वृद्धिहेत्ववयवोपचयरूपेति विभागः। गुणेष्व-
लब्धपर्य्यवसानः परिणाम इति श्रुत्वाक्षिपति। अथेति। अस्य
संसारस्य जन्मादिपरिणामजातस्य स्थित्या गत्वा च गुणेषु वर्त्त-
मानस्य सृष्टिप्रलयप्रवाहेणावस्थितस्य क्रमसमाप्तिरस्ति न वा।
आद्ये अलब्धपर्य्यवसानोक्तिविरोधः। अन्त्ये परिणामक्रमसमाप्ति-
र्गुणानामिति पूर्वसूत्रविरोधः, तथा भूयश्चान्ते विश्वमायानिवृत्ति-
रितिश्रुतिविरोधश्चेति। पूर्वसूत्रे कृतार्थपुरुषं प्रत्येव परिणाम-
क्रमसमाप्तिर्गुणानामुक्ता न तु सामान्यत इत्याशयेन समाधत्ते।
अवचनीयमेतदिति। प्रत्युत्तरानर्हमेतद्भवद्वचनमित्यर्थः। उक्त-
प्रश्नस्योत्तरानर्हत्वं प्रतिपादयितुम् आदावुत्तरार्हं द्विविधप्रश्नं
दर्शयति। अस्ति प्रश्न इति। सर्वो जातो मरिष्यतीति एकान्त-
वचनीयोऽविभज्यवचनीयः प्रश्नः। अस्य च अभो इति प्रति-
वचनं सत्यं भो इत्यर्थः। ओं भो इति पाठस्तु समीचीनः।
अविभज्यवचनीयं प्रश्नं प्रदर्श्य विभज्यवचनीयं प्रश्नान्तरं प्रद-
र्शयति। अथ सर्वो मृत्वा जनिष्यतीति विभागेन वचनं प्रत्यु-
त्तरं दर्शयति। प्रत्युदितेति। विभज्यवचनीयप्रश्नं लौकिक-

मपि दर्शयति। तथा मनुष्येति। उक्तप्रश्नस्तु यथाश्रुत एकान्तत एवावचनीय इत्याह। अयं त्विति। अयमित्युक्तं विशिष्याह। संसार इति। अवचनीयत्वमेवोपपादयति। कुशलस्येत्यादिना दोष इत्यन्तेन। कुशलस्य कुशले गुणकृतस्य संसारक्रमस्य समाप्तिरस्ति नेतरस्मिन्नित्यतो गुणसृष्टिप्रलयप्रवाहोच्छेदानुच्छेदान्यतरावधारणे दोषः। आद्ये बाधोऽन्त्ये कस्यापि मुक्तिर्नास्तीति शिष्यमोहापत्तिरित्यर्थः। अस्यापि प्रश्नस्य विकल्पशोत्तरं देयमित्याह। तस्मादिति। तस्मादुत्तरदानार्थमादौ विकल्पेन व्याख्येयोऽयं प्रश्न इत्यर्थः। तद्यथा। यदि च गुणानां सृष्ट्याद्युच्छेदः पृच्छ्यते तदा नास्तीत्येव वक्तव्यम्।

अनादिर्भगवान् कालो नान्तोऽस्य द्विज ! विद्यते।
अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः॥

इत्यादिवाक्यशतेभ्यः सृष्टिप्रवाहस्यानादित्ववदनन्तत्वस्यापि सिद्धेः शुष्कतर्कस्याप्रयोजकत्वात्। अन्यथा संसारहेतुत्वदृष्टस्य सर्वस्यैव सादित्वात् संसारस्यानादित्वमपि तर्कविरोधेन न सिध्येत्। भूयश्चान्ते विश्वमायानिवृत्तिरिति श्रुतिश्च मायाख्यप्रकृतेः प्रलये व्यापारोपरमाख्यां निवृत्तिमेव वदति। एतेन सर्वमुक्तिरप्रामाणिकीति सिद्धम्। यदि पुरुषस्य संसारोच्छेदः पृच्छ्यते तदा कुशलस्यास्ति नेतरस्येति प्रश्नवाक्यं विकल्प्य प्रतिवचनं सम्भवतीति उत्तरसूत्रमवतारयति। गुणाधिकारेति। गुणाधिकारः परिणामविशेषस्तत्क्रमपरिसमाप्तौ कैवल्यमिति। ततः कृतार्थानामित्यादिसूत्रेण तात्पर्य्यतः प्रोक्तं तस्य कैवल्यस्य स्वरूपमवधार्य्यत इत्यर्थः॥ ३३॥

गुणाधिकारक्रमसमाप्तौ कैवल्यमुक्तं तत् स्वरूपमवधार्य्यते,—

* पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति॥३४॥

कृतभोगापवर्गाणां पुरुषार्थशून्यानां यः प्रति-प्रसवः कार्य्यकारणात्मनां गुणानां तत्कैवल्यं, स्वरूपप्रतिष्ठा पुनर्बुद्धिसत्त्वानभिसम्बन्धात् पुरु-षस्य चितिशक्तिरेव केवला, तस्याः सदा तथै-वावस्थानं कैवल्यमिति॥ ३४॥

इति श्रीपातञ्जले योगशास्त्रे साङ्ख्यप्रव-चने कैवल्यपादश्चतुर्थः॥

कृतकर्त्तव्यतया पुरुषार्थशून्यानां गुणानां पुरुषोपकरणा लिङ्गशरीरात्मकानां प्रतिप्रसवः स्वकारणे अत्यन्तविलयः स बु कैवल्यम् एतदेव च प्रधानस्यापि ज्ञानिपुरुषं प्रति कैवल्यमुच तेन पुरुषेण सह पुनरसंयोगात् या तु धर्मधर्म्यभेदाच्चितिर्श्रा स्वरूपिणी स्वरूपप्रतिष्ठा बुद्धिसत्त्वोपाधिकरूपशून्यतारूपा जप पाये स्फटिकस्य रूपप्रतिष्ठावत् सा पुरुषस्य कैवल्यमित्यर्थ परस्परवियोगो हि उपाध्युपाधिमतोरुभयोरेव केवलता एक किता भवति ते चोभे एव दुःखभोगनिवृत्त्याख्यपुरुषार्थसा भवत इति द्वे एव कैवल्ये लक्षिते तयोश्चाद्यं कैवल्यं पुरुषस्योप चरितमित्युक्तं सांख्यकारिकायाम्।

तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति पुरुषः।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः॥

इति। न तु स्वरूपप्रतिष्ठारूपं कैवल्यं दुःखभोगात्यन्तनि-वृत्तिरूपो वा पुरुषार्थः पुरुषस्य तत्र निराकृतः मोक्षस्यान्य-

मात्रनिष्ठत्वे पुरुषार्थत्वे मोक्षार्थं प्रवृत्त्यनुपपत्तेः पुरुषार्थं हि करणानां प्रवृत्तिरिति। इतिशब्दः शास्त्रसमाप्तिसूचनार्थः। भाष्ये कार्य्यकारणात्मनामिति कार्य्यकारणभावापन्नानां महदादिसूक्ष्मभूतपर्य्यन्तानां लिङ्गशरीरघटकानामित्यर्थः। न तु कार्य्यमत्र स्थूलशरीरं तत्सत्त्वेऽपि कैवल्योदयादिति। ननु स्वस्य स्वप्रतिष्ठत्वानुपपत्त्या कथं स्वप्रतिष्ठत्वं तत्राह। स्वरूपेति। पुरुषस्य पुनर्बुद्धिसत्त्वासम्बन्धात् केवला चितिशक्तिरेव स्वरूपप्रतिष्ठेत्यर्थः। तस्या इति। स्वरूपप्रतिष्ठायां सदैवावस्थानं पुनरप्रच्युतः कैवल्यं द्वितीयमिति शेषः॥

योगग्रन्थसहस्राणां सर्वोपनिषदां तथा।
सतां च यत्र तात्पर्य्यं सोऽर्थो व्यासेन भाषितः॥
व्याख्यातश्च यथाशक्ति निर्मत्सरधिया मया।
एतेन प्रीयतामीशो य आत्मा सर्वदेहिनाम्॥

इति श्रीविज्ञानभिक्षुविरचिते पातञ्जलभाष्यवार्त्तिके
कैवल्यपादश्चतुर्थः।

---

समाप्तं चेदं दर्शनम्।